'दता भवतु 'शुन्वतो रथः' (ऋ १,९४,८) इति[1] त्रयः पादा देवदेवत्याकाः[2]। 'तन्नो मित्रः' (ऋ १,९४,१६) इत्यर्धर्चो लिङ्गोक्तमित्रावरुणादिबहुदेवत्यः। अथवा तस्याप्यग्निरेव देवता। मित्रावरुणादयस्तु निपातभाक्त्वेनाऽप्रधानाः ॥

अर्हते पूज्याय जातवेदसे जातानामुत्पन्नानां वेदित्रे अग्नये मनीषया निश्चितया बुद्ध्या इमम् एतत्सूक्तरूपम् स्तोमम् स्तोत्रम् रथमिव यथा तक्षा रथं संस्करोति तथा सम् महेम सम्यक् पूजितं कुर्मः। अस्य अग्नेः संसदि सम्भजने नः अस्माकम् प्रमतिः प्रकृष्टा बुद्धिः[3] भद्रा हि कल्याणी समर्था खलु। अतस्तया बुद्ध्या स्तुम इत्यर्थः। हे अग्ने! तव सख्ये नः अस्माकं त्वया सह सखित्वे सति वयम् मा रिषाम हिंसिता न भवाम। अस्मात् रक्षेत्यर्थः ॥ १ ॥

यस्मै॒ त्वमा॒यज॑से॒ स सा॑धत्यन॒र्वा क्षे॑ति॒ दध॑ते सु॒वीर्य॑म् ।
स तू॑ताव॒ नैन॑मश्नोत्यंह॒तिरग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ २ ॥

यस्मै॑ । त्वम् । आ॒ऽयज॑से । सः । सा॒ध॒ति॒ । अ॒न॒र्वा । क्षे॒ति॒ । दध॑ते । सु॒ऽवीर्य॑म् ।
सः । तू॒ता॒व॒ । न । ए॒न॒म् । अ॒श्नो॒ति॒ । अं॒ह॒तिः । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ २ ॥

स्कन्द० यस्मै यस्य[4] यजमानस्यार्थाय त्वम् आयजसे मर्यादया देवान् यजसि, सः[5] साधति[6] साधयत्यात्मनोऽभिमेतानर्थान्[7]। अनर्वा क्षेति अवैरिर्गत्यर्थः[8]। अन्यं प्रत्याश्रितत्वया[9] न गच्छतीत्यनर्वा, अन्यं[10] [11]वाऽनाश्रितत्वया गच्छतीत्यनर्वा। अन्यं वा[11] अनाश्रित्य स्वस्थाने निवसतीत्यर्थः। दधते धारयति आत्मनि सुवीर्यम्। सुवीर्यं च प्राप्नोतीत्यर्थः। सः एव तूताव तवतिर्वृद्धिकर्मा (तु. धा २,२५)। सर्वाभिर्वृद्धिभिर्वर्धते। न च एनम् अश्नोति व्याप्नोति अंहतिः पापं वधो वा। किञ्च अग्ने! सख्ये मा रिषाम वयम् तव ॥ २ ॥

वेङ्कट० यस्मै त्वम् देवान् आयजसे हविः आदाय देवेभ्यः प्रयच्छसि। सः साधयति[12] अभिलषितम्,[13] अप्रत्यृतः च निवसति, धारयति च सुवीर्यम्[14]। सः वर्धते, न एनम् अश्नोति अर्तिः ॥ २ ॥

मुद्गल० यस्मै यजमानाय हे अग्ने! त्वम् आयजसे देवानाभिमुख्येन, सः[4] यजमानः साधति स्वाभिलषितं साधयति। प्राप्नोतीत्यर्थः। किञ्च स यजमानः अनर्वा शत्रुभिरप्रत्यृतः सन् क्षेति निवसति। तथा सुवीर्यम् शोभनवीर्योपेतं धनम् दधते धारयति। प्राप्नोतीत्यर्थः। पुनश्च सः यजमानः तूताव वर्धते। एनम् यजमानम् अंहतिः आर्तिर्दारिद्र्यम् न अश्नोति न प्राप्नोति। अन्यत् पूर्ववत् ॥ २ ॥

श॒केम॑ त्वा स॒मिधं॑ सा॒धया॒ धिय॒स्त्वे दे॒वा ह॒विर॑द॒न्त्याहु॑तम् ।
त्वमा॑दि॒त्याँ आ व॑ह॒ तान्ह्यु१॒॑श्मस्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ ३ ॥

१-१. नास्ति मै'. २. देवदेवत्याः मै'. ३. हि बुद्धिः हि मूको. ४. यस्य यस्य अ ति. ५. नास्ति मूको. ६. नास्ति अ. ७. साधयत्या° कु. ८. अवैरि° मूको. ९. °श्रितया कु. १०. अन्यः अ. ११-११. नास्ति अ. † °तया न मूको. १२. °यति कु. १३. °लषि° वि' अ'. १४. नास्ति वि' अ'.

शकेर्म । त्वा । सम्ऽइधम् । साधर्य । धियः । त्वे इति । देवाः । हविः । अदन्ति । आऽहुतम् ।
त्वम् । आदित्यान् । आ । वह । तान् । हि । उश्मसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥

स्कन्द० शकेम शक्नुयाम त्वाम् समिधम् सुसमेधर्य कर्तुम्[1] । समिन्धितुम् । साधय अस्माकम् धियः कर्माणि प्रज्ञा वा[2] । किञ्च त्वे त्वयि देवाः हविः अदन्ति भक्षयन्ति आहुतम् मर्यादया हुतम् । त्वम् आदित्यान् अदितेः पुत्रान् सर्वान् देवान् यष्टुम् आ वह । तान् हि उश्मसि कामयामहे वयम् । किञ्च अग्ने ! तव[3] ॥ ३ ॥

वेङ्कट० [4]शक्नुयाम त्वां[5] वयं समेधितुम् । साधय कर्माणि । त्वयि देवाः हविः भक्षयन्ति आहुतम् । त्वम् इह आदित्यान् आ वह । तान् हि वयम् कामयामहे ॥ ३ ॥

मुद्गल० हे अग्ने ! त्वा त्वाम् समिधम् सम्यगिद्धं कर्तुम् शकेम शक्ता भूयास्म । त्वं च धियः अग्निहोत्रादीनि दर्शपूर्णमासादीनि कर्माणि साधय निष्पादय । त्वया हि सर्वे यागा निष्पाद्यन्ते । यस्मात् त्वे त्वय्यग्नौ आहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकम् हविः देवाः अदन्ति भक्षयन्ति । तस्मात् त्वं साधयेत्यर्थः । अपि च त्वम् आदित्यान् अदितेः पुत्रान् सर्वान् देवान् आ वह अस्मद्यज्ञार्थमानय । तान् हि इदानीमेव वयम् उश्मसि कामयामहे । अन्यत् पूर्ववत् ॥ ३ ॥

भरा॑मे॒ध्मं कृ॒णवा॑मा ह॒वींषि॑ ते चि॒तय॑न्तः॒ पर्व॑णापर्वणा व॒यम् ।
जी॒वात॑वे प्रत॒रं सा॑धया॒ धियोऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ ४ ॥

भरा॑म । इ॒ध्मम् । कृ॒णवा॑म । ह॒वींषि॑ । ते॒ । चि॒तय॑न्तः । पर्व॑णाऽपर्वणा । व॒यम् ।
जी॒वात॑वे । प्र॒ऽत॒रम् । सा॒ध॒य॒ । धियः॑ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ ४ ॥

स्कन्द० भराम इध्मोऽप्यत्र हरतिराहरणार्थे[6] द्रष्टव्यः । आहराम त्वदर्थम् इध्मम् । कृणवाम हवींषि ते चितयन्तः ज्ञापयन्तः[7] । किम् । सामर्थ्याद् यज्ञकर्म स्वमाहात्म्यं वा । पर्वणापर्वणा सप्तम्यर्थे तृतीयैषा । पर्वणिपर्वणि[8] । पौर्णमास्याममावास्यायां चेत्यर्थः । वयम् । किञ्च जीवातवे जीवातुर्जीविका, तदर्थम् । प्रतरम् क्रियाविशेषणमिदम् । प्रकृष्टतरं प्रवृद्धतरं वा । साधय अस्माकम् धियः । किञ्च अग्ने ![9] ॥ ४ ॥

वेङ्कट० भराम इध्मम्, कृणवाम च[10] हवींषि तुभ्यम् बुध्यमानाः पर्वणापर्वणा अहोरात्रयोः पर्वणि सायं च प्रातश्च । ताभ्याम् अग्निहोत्रं कृणवाम, मासपर्वभ्यां दर्शपूर्णमासौ, ऋतुसन्धिभिः चातुर्मास्यानि । जीवितुम् प्रकृष्टतरम् अस्माकं कर्माणि साधय ॥ ४ ॥

मुद्गल० हे अग्ने ! त्वदागमार्थम् इध्मम् इन्धनसाधनमेकविंशतिदारुसमकं[10] समित्समूहम् भराम सम्पादयाम । तदनन्तरम् ते तुभ्यम् हवींषि चरुपुरोडाशलक्षणान्यन्नानि वयम् कृणवाम करवाम । किं कुर्वन्तः । पर्वणापर्वणा प्रतिपक्षमावृत्ताभ्यां दर्शपूर्णमासाभ्याम् चितयन्तः त्वां प्रज्ञापयन्तः । स त्वम् जीवातवे अस्माकं जीवनौषधाय चिरकालावस्थानाय धियः कर्माणि अग्निहोत्रादीनि प्रतरम् प्रकृष्टतरम् साधय निष्पादय । अन्यत् समानम् ॥ ४ ॥

---

१. एधतुम् मूको. २. नास्ति ति. ३. नास्ति कु. ४-५. °शक्नुमस्त्वा वि॰ अ॰. ५. सर॰ मूको.
६. पर्वणि अ. ७. °भे सः अ ति. ८. नास्ति वि॰ अ॰. ९. प्रकृष्टतरम् वि॰ अ॰. १०. °विंशत्यौ मै॰.

कर्तेत्युच्यते । त्वम् अध्वर्युः अध्वर्युकर्मकारीत्यर्थः[1] । उत होता असि पूर्व्यः[2] चिरन्तन इत्यर्थः । प्रशास्ता च पोता च त्वमेवासि । जनुषा जन्मना[3] । जन्मन एव प्रभृतीत्यर्थः । पुरोहितः[4] पूर्वस्यां दिश्याहवनीयात्मना[5] स्थापितः सन् । किञ्च विश्वा सर्वाणि विद्वान् आर्त्विज्या ऋत्विक्कर्माणि । हे धीर ! पुष्यसि त्वं स्वयं पुष्णासि वा यज्ञसम्पादनद्वारेण यजमानत्वात् । किञ्च अग्ने सख्ये ॥ ६ ॥

वेङ्कट० त्वम् अध्वर्युः अपि च होता भवसि प्रशः मैत्रावरुणः पोता च जातेन सर्वेण ब्रह्मत्वेन पुरो निहितः[6] । सर्वाण्येव जानन् आर्त्विज्यानि पोषयसि प्राज्ञ ![7] ॥ ६ ॥

मुद्गल० हे अग्ने ! त्वम् अध्वर्युः अध्वरस्य यागस्य नेता देवान् प्रति प्रेरयिता । [8]उत अपि च पूर्व्यः मुख्यः होता देवानामाह्वाता[8] यागनिष्पादकः असि भवसि । तथा प्रशास्ता प्रकर्षेण शास्ता सर्वेषां शिक्षकोऽसि । पोता यज्ञस्य पावयिताऽसि । तथा जनुषा जन्मना स्वाभाव्येन पुरोहितः पुरस्तादागामिनि स्वर्गादौ हितोऽनुकूलाचरणोऽसि । विश्वा सर्वाणि आर्त्विज्या ऋत्विजः कर्माणि आध्वर्यवादीनि विद्वान् जानंस्त्वं हे धीर ! प्राज्ञ ! अग्ने ! पुष्यसि न्यूनाधिकभावराहित्येन सम्पूर्णानि करोषि । अन्यत् समानम् ॥ ६ ॥

यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन्तळिदिवाति रोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ७ ॥

यः । विश्वतः । सुऽप्रतीकः । सऽदृङ् । असि । दूरे । चित् । सन् । तळित्ऽइव । अति । रोचसे । रात्र्याः । चित् । अन्धः । अति । देव । पश्यसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥७॥

स्कन्द० यः त्वम् विश्वतः सर्वतः सुप्रतीकः सुमुखः[9] सुदर्शनो वा । सदृङ् समदर्श[10] असि । दूरे चित् दूरेऽपि सन् तळिदिव विद्युत् तळिदित्युच्यते । विद्युदिव[11] । अति रोचसे सुष्ठु दीप्यसे । अथवा 'तळित्' ( निघ २,१६ ) इत्यन्तिकनाम । दूरेऽपि [12]सन् अन्तिक इव[12] दीप्यसे । रात्र्याः चित् रात्रेरपि सम्बन्धि अन्धः अति तमोऽन्धकारमत्येति । कर्मोपसर्गश्रुतेश्च योग्यक्रियाध्याहारः । तमोऽतीत्य । हे देव ! पश्यसि यस्य ते तमसा दर्शनशक्तिर्न प्रतिबध्यत इत्यर्थः । यच्छब्दश्रुतेश्च तच्छब्दोऽध्याहर्तव्यः तस्य । अग्ने ![13] ॥ ७ ॥

वेङ्कट० [14]यः समन्तात्[14] प्रज्वलन्[15] सर्वतः एव अन्यूनः सदृशो भवसि, स शोभनाननः सन् दूरे अपि सन् अन्तिक इवाऽऽस्थितः अति रोचसे । अपि वा विद्युदिव रोचसे । रात्र्याः अपि अन्धः विनाशयसि ॥ ७ ॥

मुद्गल० हे अग्ने ! [16]यः त्वम्[16] सुप्रतीकः शोभनाङ्गः सन् विश्वतः सर्वस्मादपि सदृङ् असि अन्यूनः

1. कर्तारौ° अ. 2. °र्व्यः पूर्व्यः अ वि. 3. °जनेत अ; नास्ति वि. 4. नास्ति अ. 5. °त्मना स्थितः वि. 6. निहितः वि अ; °निहित वि² मूको. 7. प्राज्ञः मूको. 8-8 नास्ति मूको. 9. सुमुखः वि. 10. °दर्शी वि. 11. नास्ति वि. 12-12. सन्निधान्तिके अ. 13. अग्नि: वि; अग्ने: अ. 14-14. नास्ति वि: समन्तं वि[2,3] अ[2,3]. 15. ज्वलन्° मूको. 16-16. त्वं मूको.

सदृशो भवसि स त्वम् दूरे चित् सन् दूरेऽपि वर्तमानः सन् तळिदिव अन्तिके वर्तमान इव अति रोचसे दीप्यसे । रात्र्याः चित् रात्रेः सम्बन्धिनम् अन्धः तमुक्तमन्धकारमपि हे देव! दीप्यमानाग्ने! अति पश्यसि अतीत्य प्रकाशसे । अन्यत् पूर्ववत् ॥ ७ ॥

पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ ८ ॥

पूर्वः । देवाः । भवतु । सुन्वतः । रथः । अस्माकम् । शंसः । अभि । अस्तु । दुःऽध्यः ।
तत् । आ । जानीत । उत । पुष्यत । वचः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥८॥

स्कन्द० 'पूर्वो देवाः' इत्यस्या ऋचः आद्यास्त्रयः पादा देवदेवत्याः । समानजातानां मध्ये पूर्वः अग्रिमः हे देवाः! भवतु सुन्वतः सोमस्य सुन्वतो यजमानस्य रथः । अस्माकम् च[1] स्तुतः[2] 'शंसः आशंसनम्[3] अभिलाषः अभि अस्तु 'अभिभवतु सर्वान्[4]' दुढ्यः[5] पापबुद्धीन् स्वद्रोहसम्बन्धिकामान्[6] । तत् युष्मत् आ जानीत आ इत्येष अतीत्यस्य स्थाने । मह्यं प्रतिजानीत । उत पुष्यत पुष्णीत संवर्धयत । अस्मदीयम् वचः । परः पादो भिन्नदैवत्यात् भिन्नं वाक्यम् । ओं![7] ॥ ८ ॥

वेङ्कट० मुख्यः भवतु देवाः![8] यजमानस्य रथः[9] । अस्माकम् सुन्वतां शंसनम् अभिभवतु[10] पापबुद्धीन् । तत् इदं मदीयं वचनं यूयम् अभ्यनुजानीत[11] । अपि च तत् पोषयत । इति देवदेवत्याः त्रयः पादाः ॥ ८ ॥

मुद्गल० हे देवाः! अग्न्यवयवभूताः सर्वे देवाः! सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य रथः पूर्वः अन्येषामयजमानानां रथेभ्यो मुख्यः भवतु । अपि च अस्माकम् शंसः शंसनीयमभिशापरूपं पापम् दुढ्यः दुर्धियः पापबुद्धीन् अस्मद्विहाचरणपरान्शत्रून् अभि अस्तु अभिभवतु तान् बाधताम् । तत् इदं मद्वाक्यं हे देवाः! आ जानीत आभिमुख्येनावगच्छत । उत अपि च तत् वचः अस्मदीयं वचनं[12] तदर्थाचरणेन पुष्यत प्रवर्धयत[13] । हे देव! सर्वात्मक! अग्ने! । सख्ये इत्यादि पूर्ववत् ॥ ८ ॥

वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये अन्ति वा के चिदत्रिणः ।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥ ९ ॥

वधैः । दुःऽशंसान् । अप । दुःऽध्यः । जहि । दूरे । वा । ये । अन्ति । वा । के । चित् । अत्रिणः ।
अथ । यज्ञाय । गृणते । सुऽगम् । कृधि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ९ ॥

स्कन्द० वधैः दुःशंसान् पापाभिलाषान् । अस्मद्विनाशनकामानित्यर्थः[14] । दुढ्यः पापबुद्धीन् । अप जहि दूरे वा ये अन्तिके[14] वा केचिदत्रिणः अत्तारः भक्षयितारः । विनाशयितारोऽस्माकमित्यर्थः ।

---

१. नास्ति कु. २. स्तुतो स्वा क. ३-३. शंसनम् क. ४-४. तुदितम् क लि. ५. °ध्यः कुधियः लि. ६. तदसम्यक्कि° क; नदीश° कु लि. ७. अमित लि. ८. देवाय वि°. ९. रथे वि°. १०. °भवतु वा वि°. ११. °जानत सुको. १२. वचः मै°. १३. अस्य वि° लि. १४. नास्ति क.

अभ्यात्स्वं च 'अंधं अनल्लकम्'[1] यज्ञाय यजार्थिने[2] यजते स्तुवते मह्यम् सुगम् अगठितमपि सुगमास्मैतदिह द्रष्टव्यम्। 'अस्मभ्यमिन्द्र वरिवः सुगं कृधि' (ऋ १, १०२, ४) इति यथा। सुगम् कृधि कुरु। अथवा यजतेति हेतुकर्तर्यर्थे चतुर्थी। सुगशब्दोऽपि सुगमदेशवचनः। यजेन हेतुना स्तुतो ममार्थाय सुगमं स्वर्गादिदेशं कुर्वित्यर्थः। किञ्च अग्ने! ॥ ९ ॥

वेङ्कट० आयुधैः दुःशंसान् दुर्बुद्धींश्च अप जहि, दूरे वा ये के चित् अन्तिके वा भवन्ति अदनशीला राक्षसाः। अथ यजार्थं स्तुवते शोभनगमनमार्गं[3] कुरु ॥ ९ ॥

मुद्गल० हे अग्ने! त्वम् वधैः हननसाधनैरायुधैः दुःशंसान् दुःखेन कीर्तनीयान् दूढ्यः दुर्धियः पापबुद्धीन् अप जहि वधं प्रापय। ये के चित् ये केचन अन्ति[4] अन्तिके वा दूरे वा दूरे विप्रकृष्टदेशे वर्तमानाः अत्रिणः अत्तारः राक्षसादयो विद्यन्ते, तान् दुर्धियोऽपजहीत्यर्थः। अथ अनन्तरम् यज्ञाय यज्ञवते गृणते त्वां स्तुवते यजमानाय सुगम् शोभनं मार्गम् कृधि कुरु। अन्यत् पूर्ववत् ॥ ९ ॥

यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥ १० ॥

यत्। अयुक्थाः। अरुषा। रोहिता। रथे। वातऽजूता। वृषभस्यऽइव। ते। रवः।
आत्। इन्वसि। वनिनः। धूमऽकेतुना। अग्ने। सख्ये। मा। रिषाम। वयम्। तव ॥ १० ॥

स्कन्द० दावाग्निरिह स्तुतिः। यत् यदा अयुक्थाः दावाग्निरूपत्वात्[5] अग्निं गन्तुं युनक्षि अरुषा गन्तारौ रोहिता लोहितवर्णावश्वौ आत्मीये रथे। कीदृशौ। वातजूता "वातवत् यौ जवतः गच्छतः तौ वातजूतौ"। अत्यन्तवेगावित्यर्थः। यदा इति वचनात् तदा इत्यध्याहार्यम्[6]। तदा रथेन गच्छतः वृषभस्येव ते रवः। शब्दबहुत्वात् भवतीति वाक्यशेषः। आत् तदैव च इन्वसि व्याप्नोषि वनिनः 'विष्वञ्चि विवयन्ति वनिनो न शाखाः' (ऋ ७, ४३, १), 'अभि समानं वनिनश्च वीरुधः' (ऋ १०, ९१, ६) इति प्रयोगदर्शनात् वनिनो वनस्पतय इहोच्यन्ते। वनस्पतीन्। धूमकेतुना केतुः पताकोच्यते। धूमः केतुस्थानीयो यस्य तेन धूमकेतुना। सामर्थ्यात् ज्वालासमूहेन ज्योतिषा[7] वा। ईदृशस्याग्नेः ॥ १० ॥

वेङ्कट० यदा रथे युनक्षि गन्तारौ लोहितवर्णावश्वौ वातवेगौ गमनाय स्वरथे, तदानीं गच्छतस्तव शब्दः वृषभस्येव श्रूयते। अथ त्वं व्याप्नोषि[11] वृक्षान् धूमकेतुना ज्वालालक्षणेन ॥ १० ॥

मुद्गल० हे अग्ने! अरुषा आरोचमानौ रोहिता लोहितवर्णावश्वौ वातजूता वातेन "वायोर्जूतं जवो"[8] येन इव वेगो ययोस्तावीदृशावश्वौ रथे यत् यदा अयुक्थाः अयोजयः, तदानीं वनानि दहतः ते तव रवः शब्दः वृषभस्येव दृप्तस्य महोक्षस्य शब्द इव गम्भीरो भवति। आत् अनन्तरम्

---

१. अथवा मूको. २-२. नास्ति वि; अथवाऽन्य' अ. ३. ज्ञाता वि. ४. 'अ मार्ग' लभ. ५. अन्तिकम् मूको. ६. 'रूपत्वम् अ वि. ७-७. नास्ति वि. ८. 'ध्याहार्यः अ वि. ९. 'वेग अ; 'स्तुदिति कु. १०. नास्ति वि. ११. व्याप्नोषि' वि' लभ. १२-१२. ज्वाः ते मूको.

धनिनः वनसम्बद्धान् वृक्षान् धूमकेतुना धूमः केतुः प्रज्ञापको यस्य तादृशेन रश्मिना इन्वसि व्याप्नोषि । अन्यत् पूर्ववत् ॥ १० ॥

इति प्रथमाष्टके षष्ठाध्याये एकत्रिंशो वर्गः ॥

अध॑ स्व॒नादु॒त बि॑भ्युः पत॒त्रिणो॑ द्र॒प्सा यत्ते॑ यव॒सादो॒ व्यस्थि॑रन् ।
सु॒गं तत्ते॑ ताव॒केभ्यो॒ रथे॒भ्योऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ ११ ॥

अध॑ । स्व॒नात् । उ॒त । बि॒भ्युः॒ । प॒त॒त्रिणः॑ । द्र॒प्साः । यत् । ते॒ । य॒व॒स॒ऽअदः॑ । वि । अस्थि॑रन् ।
सु॒ऽगम् । तत् । ते॒ । ता॒व॒केभ्यः॑ । रथे॑भ्यः । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ ११ ॥

स्कन्द० अध-शब्दोऽत्र यदा इत्यस्यार्थे[1] । यदा स्वनात् शब्दात् उत बिभ्युः पतत्रिणः[2] पतत्रिणः पक्षिण उच्यन्ते । पक्षिणोऽपि बिभ्यति, किमुतान्ये प्राणिनः । कदा । उच्यते । द्रप्साः 'दृप्सिद्रप्सान् प्रास्य' इत्यादिषु द्रप्सशब्दः कठिनवचनः । 'कठिनाः । बहुलरूपा'[3] इत्यर्थः । तव यदा ते तव दावात्मकस्य[4] स्वभूताः यवसादः यवसं[5] तृणम्, तस्यात्तारो ज्वालासमूहाः वि अस्थिरन् विहरन्ति रूपम् । वितिष्ठन्ते । सर्वं व्याप्नुवन्तीत्यर्थः । किञ्च सुगम् तत् तच्छब्दश्रुतेर्यच्छब्दार्थसम्बन्धो यच्छब्दोऽध्याहार्यः[6] । यत् पर्वतदुर्गादि अन्यः कश्चित् गन्तुं न शक्नोति सुगं तत् ते भव । न च केवलस्य । किं तर्हि । तावकेभ्यः रथेभ्यः षष्ठ्यर्थे चतुर्थी पञ्चमी वा । "एषां रथानां" च त्वदीयानाम् । किञ्च अग्ने ! सख्ये ॥ ११ ॥

वेङ्कट० यदा दवाग्नेः[7] शकलानि तृणस्य भक्षकाणि अरण्ये वितिष्ठन्ते, अनन्तरमेव दवाग्निशब्दात्[8] पक्षिणो बिभ्यति । शोभनगमनम् तत् अरण्यम् अग्नेः रथेभ्यः भवति । ते इति पूरणम् । तत्र त्वं यथाऽऽत्मीयैः यथाकामं सञ्चरसीत्यर्थः ॥ ११ ॥

मुद्गल० हे अग्ने ! अध दग्धुं वनप्रवेशानन्तरम् स्वनात् त्वदीयात्[9] पूर्वोक्तगम्भीरशब्दात् । उत-शब्दोऽप्यर्थः । पतत्रिणः पक्षिणोऽपि बिभ्युः बिभ्यति भयं प्राप्नुवन्ति । किमु वक्तव्यमन्येषां वनस्थानां वृक्षादीनां भीतिर्जायत इति । अतस्त्वयि वने प्रविशति सर्वे प्राणिनो भयं प्राप्नुवन्तीत्यर्थः । तादृशस्य ते तव द्रप्साः ज्वालैकदेशाः यवसादः यवसानामरण्ये वर्तमानानां तृणानामत्तारः सन्तः यत् यदा वि अस्थिरन् विविधमवतिष्ठन्ते तत् तदा ते तव सर्वमरण्यम् सुगम् सुखेन गन्तुं शक्यम् । अतः तावकेभ्यः त्वदीयेभ्यः रथेभ्यः च तदरण्यं सुगं भवति । पूर्वं महद्भिर्वल्लीकाष्ठैः तृणादिषु दग्धेषु सत्सु त्वदीया रथाः प्रतिबन्धमन्तरेण प्रचरन्तीति भावः । अन्यत् समानम् ॥ ११ ॥

अ॒यं मि॒त्रस्य॒ वरु॑णस्य धा॒यसे॑ऽवया॒तां म॒रुतां॒ हेळो॒ अद्भु॑तः ।
मृ॒ळा सु नो॒ भूत्वे॑षां॒ मनः॒ पुन॒रग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ १२ ॥

---

१. यस्यार्थे वि. २. नास्ति भ. ३-३. कठिनबहुल° वि; °बहुरूपाः भ. ४. दावस्य° वि. ५. यवसं भ. ६. °ध्याहार्यः वि. ७-७. त्वाग्नेस्तृणस्य भ. ८. दावाग्नेः ङ. ९. दावाग्ने° वि°. १०. त्वदी° मै°.

अयम् । मित्रस्य । वरुणस्य । धायसे । अवऽयाताम् । मरुताम् । हेळः । अद्भुतः ।
मृळ । सु । नः । भूतु । एषाम् । मनः । पुनः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥१२॥

स्कन्द० अत्रेतिहासमाचक्षते—'मित्रो वरुणो मरुतश्च कुत्सस्य यज्ञमाजग्मुः । सोऽग्निस्तुत्या प्रिय-मनाः तान् जुहाव । तस्मै क्रुद्धा मरुतोऽपजग्मुः । तत्सकाशे कुत्सोऽग्निमुवाच' इति । अयम् धायसे सोमपानाय मित्रस्य वरुणस्य मरुतां च अवयानाम् अवयानरूपेऽपेतस्य स्थाने । अवमत्वादप गच्छताम् । हेळः क्रोधः अद्भुतः महान् । साकाङ्क्षत्वात् प्रसादेन व्यावर्ततम् इति वाक्यशेषः । एतत् कुर्वन् मृळ सु सुष्ठु सुखय नः अस्मान् । भूतु एषाम् पुनः अप्यस्मासु मनः । पुनरप्य-स्मासु सानुग्रहचेतसो भवन्त्वित्यर्थः । किञ्च अग्ने! ॥ १२ ॥

वेङ्कट० अयम् मित्रावरुणयोः सोमपानाय स्वर्गात् अवस्तात् आगच्छताम् मरुताम् च क्रोधो महान् भवति । यदि प्रमादोऽस्माकं भवति कुप्यन्तीत्यर्थः । एवं 'स्थिते तान् यजन्' अस्मान् सुष्ठु सुखय । भवतु च एषाम् त्वत्प्रसादेन अस्मासु मनः पुनः अपि ॥ १२ ॥

मुद्गल० अयम् अग्नेः स्तोता मित्रस्य अहरभिमानिनो देवस्य वरुणस्य रात्र्यभिमानिनश्च सम्बन्धिने धायसे धारणाय अवस्थापनाय भवतु । मित्रावरुणाविममग्नेः स्तोतारं धारयतामित्यर्थः । अवयाताम् अवस्तादागच्छतां स्वर्गलोकस्याधस्तादन्तरिक्षे वर्तमानानाम् मरुताम् एतत्संज्ञानां देवानाम् हेळः क्रोधः अद्भुतः महान् भवति । तस्मात् क्रोधात् इममग्नेः स्तोतारं मित्रावरुणौ रक्षतामिति शेषः । अपि च नः अस्मान् हे अग्ने! सु मृळ सुष्ठु सुखय सुखय । एषाम् मरुताम् मनः च पुनः भूतु पुनरपि प्रसन्नं भवतु । अन्यत् समानम् ॥ १२ ॥

देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे ।
शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥ १३ ॥

देवः । देवानाम् । असि । मित्रः । अद्भुतः । वसुः । वसूनाम् । असि । चारुः । अध्वरे ।
शर्मन् । स्याम । तव । सप्रथःऽतमे । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ १३ ॥

स्कन्द० देवः त्वं सर्वेषाम् देवानाम् असि मित्रः अद्भुतः हविर्वहनाद्युपकारकरणात्[11] महत् मित्रमसि । वसुः वसूनाम् असि धनानां च त्वं धनमसि धनकार्यकरत्वात् । चारुः अध्वरे यज्ञे च शोभनोऽसि । तस्य शर्मन् शरणस्थाने वयम् स्याम भवेम । प्राप्नुयामेत्यर्थः । तव [12]"स्वभूते अखिलोकादर्थे" सप्रथस्तमे सर्वतः पृथुतमे । अथवा 'शर्म' ( निघ ३,४ ) इति गृहनाम । गृहे स्याम तव [13]"सम्बन्धिनि सर्वपृथुतमे । त्वया दीयमानमत्यन्तविस्तीर्णं[13] गृहं वयं प्राप्नुयामेत्यर्थः । किञ्च अग्ने! ॥ १३ ॥

---

१. नास्ति मूको. २. महान् वि. ३. नास्ति वि. ४. सुखय् कु. ५. नास्ति वि[1] अ[3]. ६. नास्ति वि[1]. ७. °मतो° अ[1] वि[1,3] कु व कपे. ८-८. स्थितान् वि[1]. ९. तत्र वि[1] अ[3]. १०. °र्थिता° मूको. ११. °करणत्वात् कु वि. १२-१२. °भूतोऽखि° अ. १३-१३. °सम्बन्धि ··· सत्तमं° वि.

इन्द्राग्नी मित्रतमः[1] ( ऋ १, १०८, १ ), 'ईळे द्यावापृथिवी'[1] ( ऋ १, ११२, १ ) इत्यादिषु च सूक्तात्मावयोरर्थं उदर्कः स एतेनार्धर्चेन समानधर्मा वेदितव्यः । यथैव[1] 'प्रकृतदेवताकः निपातितमित्रादिदेवताको'[2] वा, एवं लोऽर्थीत्यर्थः । तत्र प्रकृताग्निदेवताकत्वा[3] तावदस्यार्धर्चस्य[4] एव । एतमस्या ऋचोऽर्थयोजना । य उक्तगुणोऽसि सः त्वम् हे अग्ने! सौभगत्वस्य 'भगः' (निघ २, १० ) इति धननाम । शोभने धने हविर्लक्षणे यस्य स सुभगः । सुभग एव सौभगः । स्वार्थिकस्तद्धितः । तस्य भावः सौभगत्वम् । तस्य सौभगत्वस्य विद्वान् । षष्ठीविभक्तानामसार्थे नामनिन्वर्थः । अस्माकम् आयुः प्र तिर प्रवर्धय । इह 'अस्मिन् लोके'[5] वा हे देव ! । तत् न नः त्वया प्रवर्धितमायुः स्वस्थमनादेव ममहन्ताम्, त्वदर्थं पूजयन्तु[6] । अनुमन्यन्तामित्यर्थः[7] । के । मित्रः वरुणः अदितिः सिन्धुः पृथिवी उत द्यौः । 'युवसमैः प्राधान्यं मित्रादीनां यथायाम्यम् । अतोऽस्य सूक्तस्याग्नित्वे न व्याघातः । मित्रादिदेवताकत्वे तु पूर्वानपेक्ष एषोऽर्धर्चो योजयितव्यः[8] । त्वम् अग्ने! अस्माकमायुः प्रवर्धय । 'तत् ते' मित्रादयोऽपि मामहन्ताम् । न केवलोऽग्निरेवेति ॥१६॥

वलभीविनिवास्येतामृग्व्याख्यां समाहरत् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथामति ॥

इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये
षष्ठोऽध्यायः ॥

वेङ्कट० सः त्वम् अग्ने! सौभाग्यं[9] कर्तुं जानन् अस्माकम् आयुः वर्धय अस्मिन् लोके सति देव! । तत् इदम् अग्नेः[10] स्तोत्रं मित्रादयोऽपि पूजयन्तु[11] इति[12] ॥ १६ ॥

इत्येवं[13] षष्ठमध्यायं[14] व्याकरोत् प्रथमेऽष्टके ।
भरतस्य कुले जातो माधवो वेङ्कटात्मजः ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमाष्टके षष्ठोऽध्यायः ॥

मुद्गल० हे देव! दानादिगुणयुक्त! अग्ने! सः पूर्वोक्तगुणविशिष्टः त्वम् सौभगत्वस्य सुभगत्वं सौभाग्यम् विद्वान् जानन् इह अस्मिन् कर्मणि अस्माकम् आयुः प्र तिर प्रवर्धय । त्वया प्रवर्धितम् नः अस्माकम् तत् आयुः मित्रादयः षड् देवताः ममहन्ताम् पूजयन्ताम् । रक्षन्त्वित्यर्थः । मित्रः प्रमीतेस्त्राता । वरुणः अनिष्टानां निवारयिता । अदितिः अदीना अखण्डनीया वा देवमाता । सिन्धुः स्यन्दनशीलोदकात्मा देवता । पृथिवी प्रथिता भूदेवता । उत इति समुच्चये । द्यौः प्रकाशमाना द्युलोकात्मा देवता । एताश्च सर्वा अग्निना प्रवर्धितमायुर्ममहन्त्वामिति पूर्वेणान्वयः ॥ १६ ॥

इति प्रथमाष्टके षष्ठाध्याये द्वात्रिंशो वर्गः ॥

—*—

इति ऋग्वेदे सभाष्ये प्रथमाष्टके षष्ठोऽध्यायः समाप्तः ॥

---

१. यथैव कु; यौत अ वि. २-२. °देवतानिपातित° वि. ३. °देवताकत्वे वि. ४. °दस्यार्ध° अ. ५-५. लोके अस्मिन् अ. ६. पूजयन्तु कु. ७. अनुमन्यतामि° कु वि. ८. नास्ति वि. ९-९. तस्मै वि. १०. °नाम्नं वि[1] अ[2]. ११. °गे वि[1] अ[1]; नास्ति वि[2]. १२. °न्ति वि[3] अ[3]. १३. नास्ति कु. १४. इतीवं वि[1] अ[1]; इति अ[2] वि[2]. १५. °ध्याय° वि[1].

[९५]

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।
हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥

द्वे इति । विरूपे इति विऽरूपे । चरतः । स्वर्थे इति सुऽअर्थे । अन्याऽअन्या । वत्सम् । उप । धापयेते इति । हरिः । अन्यस्याम् । भवति । स्वधाऽवान् । शुक्रः । अन्यस्याम् । ददृशे । सुऽवर्चाः ॥ १ ॥

स्कन्द० 'औपसाय वा'। 'द्वे विरूपे चरतः' इत्यौपसाय वा अग्नये शुद्धाय वा। 'शुद्धस्य त्वग्नेः स्तुतिरिष्यते नौपसस्य'। द्वे रात्र्युषसौ विरूपे विभिन्नरूपे चरतः रात्रिर्गता उषा आगता, उषा गता रात्रिरागता, एवं गच्छतः। स्वर्थे अर्थशब्दः अर्तेर्गत्यर्थस्य गमनवचनः प्रयोजनवचनो वा[1]। शोभनगमने[2] 'शोभनप्रयोजने वा'[1]। अन्यान्या वत्सम् अन्योन्यस्य च वत्सस्थानीयम् [3]अग्निम्। अग्निः[3] हि रात्र्युषसोरुभयोः अपि[4] वत्सस्थानीयः, तत्र जायमानत्वात्। उप धापयेते धेट् पाने। उपगम्य धापयतः पाययतः[4]। किम्। सामर्थ्यात् आहुती। रात्रिर्हि उपगम्य सायमाहुतीरग्निं पाययति, प्रातराहुतीरुषाः। पूर्वोक्तयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ। ये द्वे 'रात्र्युषसौ चरतः अन्योन्यस्य च वत्सस्थानीयम् अग्निम्' उपधापयेते, तयोः हरिः अन्यस्याम् भवति हरितवर्ण एकस्यां रात्रौ स्वधावान् अन्नवानग्निः, शुक्रः अन्यस्याम् ददृशे शुक्लवर्णोऽन्यस्यां दृश्यते उषसि। उषसा ह्यत्र तस्यानन्तरभाव्यहर्लक्ष्यते[6]। अहन्यादित्यात्मना व्यवस्थितः सन् शुक्लरूपोऽग्निर्दृश्यत इत्यर्थः। सुवर्चाः सुदीप्तः ॥ १ ॥

वेङ्कट० 'अध्यायम्' 'द्वे' 'विरूपे' च माधवो न्यायविद्वदति ।
अन्वादेशस्य विषये उदात्तं यददर्शयत् ॥ १ ॥

'अस्य' इति प्रथमादेश उदात्तं स्मर्यते पदम् ।
अन्वादेशे चानुदात्तम् 'अस्य शुष्मस्य'[10] दृश्यते ॥ २ ॥

'अस्येदु मातुः सवने'[11] नन्ववाचोऽत्र दृश्यते ।
'अस्मा अस्य' इति सूक्तेऽस्मिन्निन्द्र एवापदिश्यते ॥ ३ ॥

अन्येकस्यामन्वादेश[12] इति वक्तुं न युज्यते[13] ।
'शुक्रन्यस्य काम्याया'[14] भिन्नायामपि दर्शनात् ॥ ४ ॥

---

१-१. नास्ति अ. २. नास्ति मूको. ३-३. °भवनस्तु कारान्तप्रयोजने अ; °भवमाग्नुकारान्तप्रयोजने वि; °वतने कु. ४-४. नास्ति अ. ५. नास्ति वि. ६-६. दा°°प्रमाणम् अ. ७. °लक्ष्यत° कु. ८. द्र. ३,५५,२. ९-९. विरूपेति वें अ अ. १०. ऋ १,१६४,१. ११. ऋ १,६१,७. १२. °न्येकस्या° कु अ. १३. युज्यते वि° कर्प. १४. काम्या' वि°° वा' कर्प अ; ऋ १,६,२.

त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।
पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥ ३ ॥

त्रीणि । जाना । परि । भूषन्ति । अस्य । समुद्रे । एकम् । दिवि । एकम् । अप्ऽसु ।
पूर्वाम् । अनु । प्र । दिशम् । पार्थिवानाम् । ऋतून् । प्रऽशासत् । वि । दधौ । अनुष्ठु ॥३॥

स्कन्द० त्रीणि जाना जन्मानि परि भूषन्ति परिपूर्वो भवतिः सर्वत्र परिग्रहे । परिगृह्णन्ति । अस्य अग्नेः । सत्सु[1] अन्यान्येषु जन्मसु सारभूतत्वात् त्रीण्येव जन्मान्यस्याग्नेः परिगृह्णन्तीत्यर्थः । कतमानि । उच्यते । समुद्रे एकम् वाडवात्मना । दिवि एकम् आदित्यात्मना । अप्सु[2] अप्शब्दोऽत्रोदकवचनः अन्तरिक्षनाम [3]वा । वृष्टिलक्षणासु अप्सु[3] अन्तरिक्षे वा[3] अपरं वैद्युतात्मना । किञ्च[4] पूर्वाम् अनु प्र दिशम् अनुशब्दो 'लक्षणेत्थंभूताख्यान[5]' (पा १, ४, ९०) इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः प्रथमादित्यात्मकत्वेन सम्बन्धयितव्यः । प्रशासदृतूनुपसर्गः । पूर्वां दिशं प्रति । पूर्वस्यां दिश्याहवनीयात्मना व्यवस्थापितः सन्नित्यर्थः । पार्थिवानाम् पृथिव्यां सम्भवानां यजमानानाम् ऋतून् यागकालान् प्रशासत् प्रकर्षेण कथयन्निव वि दधौ विदधाति । करोतीत्यर्थः । किम् । उच्यते । अनुष्ठु यागकर्म । यागं करोतीत्यर्थः ॥ ३ ॥

वेङ्कट० जनाः[6] स्तोतारः अस्य त्रीणि जन्मानि अलङ्कुर्वन्ति — अन्तरिक्षस्थम् एकम्, [6]दिव्यम् अपरम्, अप्सु अपरम्[6] । सोऽयं प्राचीम् दिशम् प्रति स्थित्वा मनुष्याणां स्वुच्छेन[7] कालान् प्रशासत्[8] क्रत्वाणि प्रकर्षेण विदधाति इति । औषसम्[9] अग्निम् आह । औषसाग्निप्रधानं चेदं सूक्तम् । अत्र कात्यायनः — 'औपमाथ वाऽन्त्ये' (कल २, १, ९५) इति ॥ ३ ॥

मुद्गल० अस्य अग्नेः त्रीणि त्रिलोकस्थानानि जाना जननानि जन्मानि परि भूषन्ति परितः सर्वतः अलङ्कुर्वन्ति । समुद्रे अब्धौ वडवानलरूपेण एकम् जन्म, दिवि द्युलोके आदित्यात्मना एकम्, अप्सु अन्तरिक्षे वैद्युताग्निरूपेण एकम् । एवमग्निस्त्रेधाऽऽत्मानं विभज्य त्रिषु स्थानेषु वर्तत इत्यर्थः । तत्रादित्यात्मना वर्तमानः सोऽग्निः ऋतून् वसन्तादीन् षडृतून् अनु प्रशासत् प्रकर्षेण विभक्ततया ज्ञापयन्[10] पार्थिवानाम् पृथिव्याः सम्बन्धिनां सर्वेषां प्राणिनाम् पूर्वाम् प्राचीम् च दिशम् प्रकृष्टां ककुभम् अनुष्ठु सम्यगनुक्रमेण वि दधौ कृतवान् ॥ ३ ॥

क इमं वो निण्यमा चिकेत वत्सो मातॄर्जनयत स्वधाभिः ।
बह्वीनां गर्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥ ४ ॥

कः । इमम् । वः । निण्यम् । आ । चिकेत । वत्सः । मातॄः । जनयत । स्वधाभिः ।
बह्वीनाम् । गर्भः । अपसाम् । उपऽस्थात् । महान् । कविः । निः । चरति । स्वधाऽवान् ॥ ४ ॥

---

१. नास्ति ति. २. नास्ति मूको. ३-३. °नाम ··· वास्वप्सु वि. ४. ० च ति. ५. नास्ति क.
६-६. दिव्यमन्यत् अन्यैकत्र कु. ७. कनातेन वि[1] अ[1]. ८. वर्षोक्ता वि[1] अ[1]; °यत वि[1] क अ[1]; नास्ति वि[2].
९. औपसाग्निम् वि[1] अ[1]; औपम अपं. १०. पालवन् मै[1].

¹ऊर्ध्वज्वलनस्वभावक एव ह्यग्निः । कीदृशः । स्वयशाः आत्मनिमित्तकीर्तिः । न च केवलास्वप्सु । किं तर्हि । उपस्थे उपस्थो यज्ञः आहवनीये वान्तरिक्षे वा, तत्र च । अन्या उपस्थ इत्येतत् आसु इत्येतेन विशेष्यते, न समुच्चीयते । उपस्थशब्दश्च† स्थानवचनः । आस्वोषधीषु दिक्षु वा यदग्नेः स्थानं तत्रेत्यर्थः । किञ्च उभे द्यावापृथिव्यौ बिभ्यतुः भीते जातात् त्वष्टुः सकाशात् एतास्वपि दिक्षु जायमानात् अतिवृद्धादग्नेः । भीते च सत्यौ प्रतीची अञ्चतिर्गत्यर्थः । अग्निमेव प्रतिगते । ‡अग्निवन्निश्चर्योयरे तस्मादित्यर्थः‡ । सिंहम् लुप्तोपममेतत् । सिंहसदृशं दुरभिभवमग्निम्§ प्रति जोषयेते तुषितः प्रीत्यर्थः । प्रतिशब्दश्च धात्वर्थानुवादी । भूते लट् । अप्रीणयतम्¶ । वृक्षादिरपि दिग्भिः तद्वाऽसूतेन अतर्पयतमित्यर्थः*¹ ॥ ५ ॥

वेङ्कट० ²आविष्ट्यः वर्धते चारुः³ अग्निः आसु अप्सु तिर्यग् गच्छन्तीनाम् अपाम् उपस्थे । स्वयमूर्ध्वः³ । त्वष्टुः जायमानात् भीताद्⁴ अग्नेः द्यावापृथिवी उभे अपि बिभ्यतुः । अपि च एनम् सिंहम् इव बलिनम् अभिमुखे सेवेते⁵ । अत्र निरुक्तं द्रष्टव्यम् ( ८, १४;१५ ) इति⁶ ॥ ५ ॥

मुद्गल० आसु मेघस्थास्वप्सु वैद्युतात्मना वर्तमानोऽग्निः चारुः शोभनदीप्तिः सन् आविष्ट्यः वर्धते आविर्भूतः प्रकाशमानो वृद्धिं प्राप्नोति । किं कुर्वन् । जिह्मानाम् कुटिलानां मेघेषु तिर्यगवस्थितानां तासामपाम् उपस्थे उत्सङ्गे स्वयशाः स्वाश्रययशस्कोऽग्निः ऊर्ध्वः ऊर्ध्वज्वलनः सन् । अन्तरिक्षगास्वप्सु तिर्यगवस्थितास्वपि स्वयमूर्ध्वं ज्वलतीत्यर्थः । अपि च उभे द्यावापृथिव्यौ त्वष्टुः दीप्तात् जायमानात् उत्पद्यमानात् तस्मादग्नेः प्रति बिभ्यतुः "भयं प्रापतुः" । तदनन्तरम् उत्पन्नम् सिंहम् सहनशीलम् अभिभवनशीलं तमग्निम् प्रतीची प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ आभिमुख्येन प्राप्नुवन्त्यौ जोषयेते सेवेते ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये प्रथमो वर्गः ॥

उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः ।
स दक्षाणां दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भिः ॥ ६ ॥

उभे इति । भद्रे इति । जोषयेते इति । न । मेने इति । गावः । न । वाश्राः । उप । तस्थुः । एवैः ।
सः । दक्षाणाम् । दक्षऽपतिः । बभूव । अञ्जन्ति । यम् । दक्षिणतः । हविःऽभिः ॥ ६ ॥

स्कन्द० ¹उभे द्यावापृथिव्यौ भद्रे कल्याण्यौ जोषयेते जुषितः सेवार्थः । स्वार्थे णिच् । सेवितवन्त्यौ । त्वाष्ट्रमग्निम् अतिप्रवर्धमाने परिचरितवत्यावित्यर्थः । कथम् । न मेने 'मेना ग्नाः' इति स्त्रीणां नामनी ( नि. घ. ३,२१ ) । नकारश्चात्र पुरस्तादुपचारोऽपि सामर्थ्यादुपमार्थीयः । स्त्रियाविव केचिद् भर्तारम् । किञ्च गावः न वाश्राः उप तस्थुः यथा वा वाशनस्वाभाविकाः†

१-१. नास्ति अ. † °शब्दः लि. ‡-‡ न्यरि···ते इत्यर्थः लि°¹ ². § मूले न लि. ¶ प्रीण° कु लि. * तर्प° कु लि. २-२. नास्ति वि². ३. कुटिलम् क. स्वयमूर्ध्वोऽनोऽलः अ¹ वि³; स्वयमूर्ध्वनोऽयः वि¹, स्वयमूर्ध्व···कु; स्वयमूर्ध्वनोऽयः अप. ४. भयात् वि¹ अ². ५. सेवेते वि¹⁾¹ अ¹ अप कु. ६. नास्ति कु. ७-७. नास्ति मूको. ८-८. नास्ति अ. † 'वाशा' लि.

'अग्निप्रसूता गावः स्वान् वत्सान् पयःसंपर्णेनोपतिष्ठन्ति एवं स्वाहुतमग्निम् अतिप्रवर्धमानमुप- स्थितवत्यः ता दश दिशो द्यावापृथिव्यौ च। कुत एतत्। इतिहासात्। केनोपतस्थुः। उच्यते। एनैः प्रस्तुतपर्यैः। किञ्च सः अग्निः दक्षाणाम् सर्वबलानाम् दक्षपतिः बभूव यथैव प्रवीणशब्दः प्रकृष्टो वीणायां प्रवीण इत्येवमपि व्युत्पाद्यमानः प्रवीणो व्याकरणे प्रवीणो मीमांसायामित्यादिप्रयोगदर्शनात्‡ प्रकर्षमात्रवचनो विज्ञायते, न वीणाविषयकप्रकर्षवचनः। एवमयमपि दक्षपतिशब्दः दक्षस्य §पतिर्दक्षपतिरित्येवमपि व्युत्पाद्यमानोऽधिपतिमात्रवचनो§ द्रष्टव्यः। अधिपतिर्भवतीत्यर्थः। अञ्जन्ति अञ्जयन्तीत्यर्थः। शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः। शोभार्थ- मुपगच्छन्ति। यम् आहवनीयात्मना स्थितम्। दक्षिणतः दक्षिणस्यां दिशि। हविर्भिः 'इत्थंभूतलक्षणे' (पा २, ३, २१) इत्येवमेषा तृतीया। अपि भवान् कमण्डलुना छात्रमद्राक्षीद् इति यथा। गृहीतहविष्का इत्यर्थः'[1] ॥ ६ ॥

वेङ्कट० उभे स्त्रियौ द्यावापृथिव्यौ कल्याण्यौ अग्निं सेवेते। न इति पूरणम्[2]। गावः इव शब्दकारिण्यः वत्सम् एनं गमनैः ऋत्विजः उपतिष्ठन्ति। सः अयं [3]बलपतिः† अभवत्, यम् एनं यज्ञस्थम् अध्वर्यवः अपरेण‡ आहवनीयं दक्षिणाऽतिक्रम्य§ तत्र स्थिता हविर्भिः सिञ्चन्ति§[3] ॥ ६ ॥

मुद्गल० उभे द्यावापृथिव्यौ भद्रे भजनीये शोभमाने येते स्त्रियौ योषिते न सेवेते इव। यथा शोभने स्त्रियौ चामरहस्ते राजानम् उभयतः सेवेते एवं द्यावापृथिव्यौ एनमग्निम् उभयतः सेवेते इत्यर्थः। अपि च वाश्राः हम्भारवं कुर्वत्यः गावः न गावो यथा एवैः स्वकीयैश्च- रिङ्गणावरतिविशेषेण स्वकीयान् वत्सान् उप तस्थुः सङ्गच्छन्ते, तथैनमग्निम् उपस्थिते भवतः। अतः सः अग्निः दक्षाणाम् सर्वेषां बलानाम् दक्षपतिः बलाधिपतिः बभूव आसीत्। बलानां मध्ये यदतिशयितं बलं तस्याधिपतिर्बभूवेत्यर्थः। यम् अग्निम् दक्षिणतः आहवनीयस्य दक्षिणभागे अवस्थिताः ऋत्विजः हविर्भिः चरुपुरोडाशादिभिः अञ्जन्ति आर्द्रीकुर्वन्ति तर्पयन्ति। सोऽग्निरिति पूर्वेणान्वयः ॥ ६ ॥

उद् यंयमीति सवितेव बाहू उभे सिचौ यतते भीम ऋञ्जन् ।
उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥ ७ ॥

उत् । यंयमीति । सविताऽइव । बाहू इति । उभे इति । सिचौ । यतते । भीमः । ऋञ्जन् ।
उत् । शुक्रम् । अत्कम् । अजते । सिमस्मात् । नवा । मातृऽभ्यः । वसना । जहाति ॥ ७ ॥

स्कन्द० 'उद् यंयमीति' [4]देवपरिवेषणवेलायां यदुद्यमनं† तदिहाभिप्रेतम्। देवान् परिवेष्टुं दर्वीमादाय पुनःपुनरुद्यच्छति। सविता इव यजमाननामैतच्छाकपूणिना पठितम्। यजमान इव। बाहू बाहुसम्बन्धात् हस्तावेवात्र बाहुशब्देन लक्ष्येते‡। आत्मीयौ हस्तौ। देवान् परिवेष्टुं हस्ताभ्यां दर्वीमादाय यज- मानवत् पुनःपुनरुत्क्षिपतीत्यर्थः। सविताऽत्र आदित्य एव वाऽभिप्रेतः। तथाहि मन्त्रान्तरेऽप्यस्य[4]

---

१-१. नास्ति भ. † नास्ति वि. ‡ °व्यासिमित्र° वि. §-§ पतिरिति व्युत्पाद्यमानोऽपि पतिमात्र° वि. २. रणः भ[1] कु. ३-३. नास्ति लपं. † बले पतिः वि[1,3] अ; बले बलपतिः कु. ‡ अपरेण वि[1]; परेण ल. § दक्षिणाग्निमति° वि[1] अ[2]. § नास्ति वि[1] अ[2]. ४-४. नास्ति मूको. ५-५. नास्ति भ. † यदुद्यमन° वि. ‡ लक्ष्यते मूको.

'ऊर्ध्वहस्तत्वं दृश्यते। 'उदु अयाँ उपवक्तेव' (ऋ ६,७१,५) इति यथा। ऐतिहासिकाश्च प्रतिमासु चित्रकर्मसु ऊर्ध्वहस्तमेव† सवितारं स्मरन्ति। हवींष्युद्यच्छन्नादित्य इव हस्तौ उद्यच्छतीत्यर्थः। उभे सिची यतते सिचशब्दोऽत्र वस्त्राञ्चलवचनः। 'पितुर्न पुत्रः सिचमा रभे ते' (ऋ ३,५३,२) इति यथा। यततिरपि सामर्थ्यात् सन्नहनार्थः। उभे अपि वस्त्राञ्चले गाढं सन्नह्यति‡। परिकरबन्धं च करोतीत्यर्थः। अथवा उत् यंसीति होमवेलायां स्रुगुद्यमनं यदिहाभिप्रेतम्। होमवेलायाम् अभिमतस्रुचौ हस्तौ आहुतीः प्रतिग्रहीतुं§ प्रसारयतीत्यर्थः। उभे सिची यतते इत्यपि साध्यसंवननात् जुहूपभृतौ¶ उच्येते। यततिरपि सामर्थ्याच्चुम्बनार्थः। उभे अपि जुहूपभृतौ¶ चुम्बतीत्यर्थः[1]। भीमः अतिप्रज्वलितत्वात्[1] भयानकः। ऋञ्जन् प्रसाधयन् आत्मानं यज्ञं सिची वा। किञ्च उत् शुक्रम् अत्कम् अज्यते अत्कशब्दोऽत्र रूपवचनः। 'सचा यदासु जहतीष्वत्कम्' (ऋ १०,९९,८) इति यथा। अजतिरपि क्षेपणार्थः। शुक्रमात्मीयज्वालाख्यं रूपमुत्क्षिपति। ऊर्ध्वं ज्वलतीत्यर्थः। सिमस्मात् सर्वस्मादाहवनीयागाराद्[2] अन्यतो वा स्थानात्। किञ्च नवा मातृभ्यः वसना जहाति नवानि वसनानि। वसनानि तमांस्यत्राभिप्रेतानि, अनिरोधत्वादाच्छादकत्वाच्च दिशाम्। मातरः अपि[3] दिशः, स्वाष्ट्रात्मनोऽवकाश-कत्वात्। जहातीत्यपि अद् भूते काले। अचिरोत्पन्नानि तमांसि दिग्भ्यः स्वाष्ट्रोऽग्निरजहात्। अपनीतवानित्यर्थः। अथवा ओषधिवनस्पतयोऽत्र मातर उच्यन्ते। तासां नवानि वसनानि जीर्णास्त्वचः। मातृभ्य इति षष्ठ्यर्थे पञ्चमी। ओषधिवनस्पतीनामजीर्णास्त्वचः अग्निर्दग्ध्वा जहातीत्यर्थः ॥ ७ ॥

वेङ्कट० यथा [4]उद्बाहुः[4]† सविता उदेति, तद्वद् अयमात्मीयं तेजः उद्यच्छति। सोऽयम्‡ उभे सिची सिक्तृ सिक्तीः। द्यौरर्कः पृथिवीं सिञ्चति, पृथिवी§ हविर्भिः दिवम्, ते उभे अपि अभिगच्छति तेजसा प्रकाशयति। भयङ्करोऽग्निः शुक्रम् रूपमादत्ते सर्वस्मात्। नवानि च वसनानि ज्वालाख्यानि अद्‌भ्यः विसृजत्यासां मध्याद् उत्तिष्ठन्[5] ॥ ७ ॥

मुद्गल० सवितेव सर्वस्य प्रेरक आदित्यो यथा बाहू बाहुस्थानीयान् रश्मीनुद्गमयति, तथाऽय-मौपसोऽग्निः स्वकीयानि तेजांसि उत् यंसीति उद्यच्छतानि ऊर्ध्वाभिमुखानि करोति। तदनन्तरम् भीमः सर्वेषां भयङ्करोऽग्निः उभे सिची उभे द्यावापृथिव्यौ ऋञ्जन् प्रसाधयन् स्वतेजसाऽलङ्कुर्वन् यतते स्वव्यापारे प्रवर्तते। तदनन्तरम् सिमस्मात् सर्वस्मात् भूतजातात् शुक्रम् दीप्तम् अत्कम् सारभूतं रसम् उत् अजते रश्मिभिरूर्ध्वमादत्ते। अपि च मातृभ्यः स्वमातृस्थानीयेभ्यो वृक्षगुल्मेभ्यः सकाशात् नवा नवानि प्रत्यग्राणि वसना सर्वस्य जगत आच्छादकानि तेजांसि जहाति उद्गमयति ॥ ७ ॥

त्वेषं रूपं कृणुत उत्तरं यत् संपृञ्चानः सदने गोभिरद्भिः ।
कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥ ८ ॥

---

१-१. नास्ति ब. † °हस्तं वि. ‡ नह्यति मूको. § ग्रहीतुं वि. ¶ °भृतौ कु. २. °वनिया° वि. ३. °गारात् ब. ४. नास्ति वि. ५-५. नास्ति वि[1] अ[1]. † बाहुः खं. ‡ सिक्तृ कु; सिचे वि[1] अ[1]. § पृथिवी कु.

त्वेषम् । रूपम् । कृणुते । उत्ऽतरम् । यत् । सम्ऽपृञ्चानः । सदने । गोभिः । अत्ऽभिः ।
कविः । बुध्नम् । परि । मर्मृज्यते । धीः । सा । देवऽताता । सम्ऽइतिः । बभूव ॥ ८ ॥

**स्कन्द०** त्वेषम्[1] दीप्तम् आत्मरूपम् अग्निः कृणुते कुरुते । उत्तरम् सर्वत उत्कृष्टतरम् । यत् सम्बन्धा अत्र[2] लुप्तद्रष्टव्यः । यत्र संपृञ्चानः सम्पृच्यमानः सदने यज्ञगृहे गोभिः अद्भिः गोशब्दोऽत्र स्तुतिवचनः । 'गोभिर्मदेमाग्ने अस्मात्' ( ऋ ८,२,६ ) इति यथा । स्तुतिभिः सोमलक्षणाभिश्चाद्भिः । स्तुतिभिः[3] स्तूयमानः सोमेन च हूयमान इत्यर्थः । कविः मेधावी । बुध्नम् परि मर्मृज्यते बुध्नमन्तरिक्षम्, तच्च तमोऽपनयनेन सर्वतः शोधयति । धीः सा देवताता 'धीः' ( निघ २, १ ) इति कर्मनाम । 'सङ्गच्छन्ते यस्यां[4] देवाः सा'[5] समितिः बभूव भवति । यत्र यज्ञकर्मणि दीप्तमात्मनो रूपमग्निः करोति, अन्तरिक्षाच्च तमोऽपनयति, तत्रैव देवाः सङ्गच्छन्ते, नान्यत्रेत्यर्थः ॥ ८ ॥

**वेङ्कट०** [6]दीप्तम् रूपम् कृणुते, यत् रूपम् उत्कृष्टतरं भवति, संपृञ्चन् समुद्रे तेजोभिः अद्भिः† च । क्रान्तः‡ ध्यानात्मकः§ मूलम् उदकं ज्वालाभिः[7] 'परिमार्ष्टि । सोऽयं[8] देवैः ततः सङ्गतः भवति । प्रकाशते पूर्वस्यां दिशि ॥ ८ ॥

**मुद्गल०** सदने अन्तरिक्षे गोभिः गन्त्रीभिः अद्भिः मेघस्थाभिः सह संपृञ्चानः वैद्युतरूपेण संयुक्तः सन् त्वेषम् दीप्तं सर्वैरप्युद्गन्तव्यम् उत्तरम् उत्कृष्टतरम् रूपम् वैद्युतं प्रकाशम् यत् यदा कृणुते करोति, तदानीम् कविः क्रान्तदर्शी धीः सर्वेषां धारकः सोऽग्निः बुध्नम् सर्वस्योदकस्य मूलभूतमन्तरिक्षम् परि मर्मृज्यते परितो मार्ष्टि स्वतेजसाच्छादयति । तस्याग्नेः सा देवताता देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती[9] समितिः बभूव[9] देवानां सङ्गतिर्भवति[9] ॥ ८ ॥

उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।
विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥ ९ ॥

उरु । ते । ज्रयः । परि । एति । बुध्नम् । विऽरोचमानम् । महिषस्य । धाम ।
विश्वेभिः । अग्ने । स्वयशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ॥ ९ ॥

**स्कन्द०** उरु विस्तीर्णम् ते तव ज्रयः अत्र जयतिर्गतिकर्मा ( द्र. निघ २,१४ ) । गमनस्वभावकम् परि एति परिगच्छति । सर्वतो व्याप्नोतीत्यर्थः । बुध्नम् अन्तरिक्षम् । विरोचमानम् विविधं दीप्यमानम् । महिषस्य महन्नामैतत् ( द्र. निघ ३,३ ) । महतो भवतः । धाम तेजः । य ईदृशोऽसि, सः[1] त्वम् विश्वेभिः सर्वैः हे अग्ने ! स्वयशोभिः आत्मनिमित्तं यशो येषु पालनेषु[1] तानि स्वयशांसि तैः[1] इद्धः दीप्तः सन् अदब्धेभिः अहिंसितैः पायुभिः पालनैः पाहि रक्ष अस्मान् ॥ ९ ॥

---

१. नास्ति मूको. २. नास्ति क. ३-३. °तो यदि न् कु; °ति यस क; °तोऽयम वि. ४. नास्ति वि. ५-५. नास्ति वि[1] अ[1]. † अद्भ्यः वि[1] अर्ध; आभिः वि[3]. ‡ क्रान्ता अर्थ. § °त्मनः अ[1] कु वि[1,3]; °क लर्थ. ६-६. °देव वि[1] अ[3]; °देव वि[1,3] अ[1] कु. ७. °ती तस्याग्नेः मै[1]. ८-८. सा सङ्गतिर्भवति मूको.

युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः ।
क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥ ७ ॥

युवम् । वन्दनम् । निःऽऋतम् । जरण्यया । रथम् । न । दस्रा । करणा । सम् । इन्वथः ।
क्षेत्रात् । आ । विप्रम् । जनथः । विपन्यया । प्र । वाम् । अत्र । विधते । दंसना । भुवत् ॥७॥

स्कन्द० युवम् युवाम्[1] वन्दनम् ऋषिम् निर्ऋतम् विश्लथेन गतं प्राप्तम् । क्षयप्राप्तमित्यर्थः । जरण्यया जरया । रथम् न यथा कश्चित् तक्षा पुराणं रथं पुनर्नवं कुर्यात् एवं हे दस्रा! करणा करणेन पुनर्यौवनस्य सम् इन्वथः सम्यग्व्याप्तवन्तौ । किञ्च क्षेत्रादा विप्रमित्यादि । अत्रेतिहासमाचक्षते—'कश्चिदृषिर्मृतभार्यो वृद्धश्च पुत्रकामोऽश्विनौ तुष्टाव । तस्याश्विनावयोनिजं क्षेत्रात् पुत्रं जनयाञ्चक्रतुः' इति । तदेतदिहोच्यते । क्षेत्रात् कृष्टा भूमिः[2] क्षेत्रमुच्यते । ततः विप्रम् मेधाविनम् । आ जनथः आकारोऽत्र धात्वर्थानुवादी । जनितवन्तौ युवाम् । विपन्यया स्तुत्या हेतुना । स्तुतौ सत्यामित्यर्थः । प्र वाम् अत्र प्रेत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः । अत्रेत्यपि प्रथमार्थे सप्तमी । प्रवृत्तिर्युवयोरेषा क्षेत्रजननलक्षणा स्तुतिभिः परिचरितुस्तस्य ऋषेरर्थाय दंसना दर्शनीया भुवत् अभवत् । युवां मुक्त्वा नान्यस्य कस्यचिदीदृशी प्रवृत्तिरित्यर्थः ॥ ७ ॥

वेङ्कट० युवम् वन्दनम् निर्गतं जरया युवत्वात् पुनरपि जीर्णम् रथम् इव दर्शनीयौ! वर्धुरादिभिः सम्पूरितवन्तौ । तस्य[3] ऋषेः पुत्रम् इच्छतः[4] भार्यायाः पुत्रं[5] मेधाविनम्[6] आ जनथः[7] यौवनवदाप्तेन तस्य स्तुत्या प्रीतौ । युवयोः कर्म परिचरते[8] वन्दनाय अस्मिन् अभ्युदये प्राभवत् ॥ ७ ॥

मुद्गल० हे दस्रा! अश्विनौ! युवम् युवाम् जरण्यया जरया निर्ऋतम् निःशेषेण प्राप्तम् वन्दनम् ऋषिम् करणा कर्मणां कर्तारौ शिल्पकुशलौ सम् इन्वथः समगच्छथः पुनर्युवानमकुरुतम् । दृष्टान्तः । रथम् न यथा कश्चित् शिल्पी जीर्णं रथं पुनरभ्यभिनवं करोति तद्वत् । अपि च विपन्यया स्तुत्या गर्भस्थितेन वामदेवेन स्तुतौ सन्तौ क्षेत्रात् आ आ समुच्चये । मातुरुदरलक्षणात् जन्मस्थानात् विप्रम् मेधाविनं तम् ऋषिम् जनथः जनयथश्च । तथा वाम् युवयोः दंसना रक्षणात्मकं कर्म अत्र अस्मै विधते परिचरते यजमानाय प्र भुवत् प्रभवतु रक्षितुं समर्थं भवतु ॥ ७ ॥

अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ।
स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्नभिष्टयः ॥ ८ ॥

अगच्छतम् । कृपमाणम् । पराऽवति । पितुः । स्वस्य । त्यजसा । निऽबाधितम् ।
स्वःऽवतीः । इतः । ऊतीः । युवोः । अह । चित्राः । अभीके । अभवन् । अभिष्टयः ॥ ८ ॥

---

1. नास्ति कु. 2. नास्ति ख. 3. तस्य वि[1] अ[1]. 4. इच्छन्तो वि[1] अ[1]. 5. °अत् इच्छतो वि[1] अ[1]. 6. न भामिनी वि[1] अ[1]. 7. जनयथः कु. 8. परिचरतो वि[1] अ[1].

पुरुषेण निर्देशः । अहमुशिजः प्रपौत्रः कक्षीवानाह्वयामीत्यर्थः । अथवा उशिजः पुत्रः औशिजो दीर्घश्रवाः । स युवामाहूतवान् । तदेतत् कुत्सेनाप्युक्तम् 'याभिः सुदानू' (ऋ १,११२,११) इति । युवम् दधीचः ऋषेः मनः आ विवासथः परिचरितवन्तौ । युवामाराधितवन्तावित्यर्थः । अथ[1] आराधनानन्तरम्[2] शिरः तृतीयार्थे द्वितीया । शिरसा प्रति वाम् युवां प्रति । युवाभ्यामित्यर्थः । अश्व्यम् अत्रापि तृतीयार्थे द्वितीया । अश्वस्यावयवभूतेन । वदत् उक्तवान् मध्वाख्यं परं ब्रह्म । कः । प्रकृतत्वात् 'दध्यङ् ह यन्मध्वाथर्वणो वाम्' (ऋ १,११६,१२) इति दर्शनाच्च दध्यङ् । अथवा शिरः अश्व्यम् इति स्वार्थ एव प्रथमा । शिरस एव वदनं प्रति कर्तृत्वम् । शिर उक्तवद् इति ॥ ९ ॥

वेङ्कट० अपि च सा वाम् मक्षिकाजातिः रसवत् मधु याचितवती । युवयोः सोमस्य मदे सति औशिजः च वाम् आह्वयति कक्षीवान् । युवाम्[3] दधीचः ऋषेः मधुप्रदानार्थम् मनः आराधितवन्तौ । ततो भवद्भ्यां 'प्रतिहितम् अश्व' अश्व्यम् दधीचः शिरः प्रति अवदत् ॥ ९ ॥

मुद्गल० उत अपि च हे अश्विनौ! मधुमत् मधुमन्तौ वाम् युवाम् स्या सा मक्षिका सरघा मधुकामा सती अरपत् अस्तौत् । तथा औशिजः उशिजः पुत्रः कक्षीवान् सोमस्य पानेन युवयोः मदे हर्षे निमित्तभूते सति हुवन्यति युवाम् आह्वयति । युवम् युवाम् तस्यै मक्षिकायै मधु दातुं मधुविद्याविदौ सन्तौ दधीचः आथर्वणस्य ऋषेः मनः चित्तं शुश्रूषया आ विवासथः पर्यचरतम् । अथ अनन्तरं तस्मिन्प्रीते सति अश्व्यम् युवाभ्यां प्रतिहितम् अश्वस्य सम्बन्धि यत् शिरः तत् वाम् युवां प्रति मधुविद्याम् वदत् अवदत् । स ऋषिरश्व्येन शिरसा उपदिष्टवानित्यर्थः ॥ ९ ॥

युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः ।
शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥ १० ॥

युवम् । पेदवे । पुरुऽवारम् । अश्विना । स्पृधाम् । श्वेतम् । तरुतारम् । दुवस्यथः ।
शर्यैः । अभिऽद्युम् । पृतनासु । दुस्तरम् । चर्कृत्यम् । इन्द्रम्ऽइव । चर्षणिऽसहम् ॥ १० ॥

स्कन्द० युवम् युवाम् पेदवे राज्ञे पुरुवारम् बहुना वरणीयं वारयितारं वा शत्रूणाम् 'हे अश्विनौ!'[4] श्वेतम् अश्वम् स्पृधाम् सङ्ग्रामयमाणाम् तरुतारम्[5] निस्तारितारम् दुवस्यथः[6] पेदव इति सम्प्रदानलुपो दुवस्यतिरत्र दानार्थः । दत्तवन्तौ । कीदृशम् । उच्यते । अभिद्युम् 'अभिगतं दीप्तिम्' । दीप्तमित्यर्थः । शर्यैः शरा इषवः[7] तैः । पृतनासु सङ्ग्रामेषु । दुस्तरम् 'अवतिरति' (निघ २,१९) इति[8] वधकर्मसु पाठात् तिरतिर्हननार्थः । तस्येदं रूपम् । दुर्हणम् । चर्कृत्यम् इदमपि कृन्ततेर्वधकर्मणः[11] (द्र० निघ २,१९) रूपम् । अत्यर्थं हन्तारम् । इन्द्रम् इव चर्षणीसहम् मनुष्याणां शत्रुभूतानामभिभवितारम् ॥ १० ॥

---

१. अथवा क. २. 'नान्तरम्' मूको. ३. नास्ति वि' क' छ. लपे. ४-४. प्रतिसिद्धितं कु; 'भाग'''वि' क'. ५-५. नास्ति क. ६. तरि' क. ७. दुव' क. ८-८. शरादीनि क. ९. 'यवः इषवः क. १०. 'रोति नास्तिरिति क. ११. कृन्तेर्' कु.

वेङ्कट० युवाम् पेदवे राज्ञे[1] बहुभिः वरणीयम् अश्विनौ! शत्रूणाम् तारकम्[2] श्वेतम् अश्वम् अददतम्[3] विस्तरणकुशलैः सङ्ग्रामेषु तरितुम् अशक्यम्[4] अभिगतदीप्तिम्[5] सङ्ग्रामेषु पुनःपुनः प्रयोक्तव्यम् इन्द्रम् इव शत्रूणाम् अभिभवितारम् ॥ १० ॥

मुद्गल० हे अश्विना अश्विनौ! पेदवे पेदुनाम्ने पुरुवारम् बहुभिर्वरणीयम् स्पृधाम् सङ्ग्रामे स्पर्धमानानां शत्रूणाम् तरुतारम् तारकम् श्वेतम् शुभ्रवर्णम् इन्द्रात् लब्धमश्वम् युवम् युवाम् दुवस्यथः दत्तवन्तौ । पुनरपि कीदृशम् । शर्यैः योद्धृभिः पृतनासु सङ्ग्रामेषु दुस्तरम् तरितुमशक्यम् अभिद्युम् अभिगतदीप्तिम् चर्कृत्यम् सर्वेषु कार्येषु पुनःपुनः प्रयोक्तव्यम् इन्द्रमिव चर्षणीसहम् । इन्द्रो यथा शत्रून् अभिभवति एवं शत्रुजनानामभिभवितारमित्यर्थः ॥ १० ॥

इति प्रथमाष्टके अष्टमाध्याये एकविंशो वर्गः ॥

## [ १२० ]

### का राधद्धोत्राश्विना वां को वां जोष उभयोः । कथा विधात्यप्रचेताः ॥१॥

का । राधत् । होत्रा । अश्विना । वाम् । कः । वाम् । जोषे । उभयोः । कथा । विधाति । अप्रऽचेताः ॥

स्कन्द० किंशब्दोऽत्र प्रकारे द्रष्टव्यः[6] । का किंप्रकारा '[7]राधत् आराधयति[7]' । होत्रा हूयतेऽसाविति होत्रा आहुतिः । यज्ञनाम वा होत्राशब्दः । आहुतिरिज्या वा । हे अश्विना! वाम् युवाम् । कः किंप्रकारो यजमानः स्तोता वा । वाम् युवयोः जोषे प्रीतौ । साकाङ्क्षत्वाद्वर्तमान इति वाक्यशेषः । उभयोः द्वयोरपि सहितयोः । किंप्रकारस्य यजमानस्य स्तोतुर्वा युवामुभावपि प्रीयेथे इत्यर्थः । कथा केन प्रकारेण विधाति '[8]युवां परिचरति[8]' अप्रचेताः अज्ञः[9] । एतत्सर्वं कथय । तत् तुल्यमहं करोमीत्यर्थः ॥ १ ॥

वेङ्कट० कीदृशी वाक् वाम्[10] आराधयति अश्विनौ! कः वाम्[11] स्तोता युवयोः उभयोः पर्याप्तकर्मा भवति[12] । केन[13] प्रकारेण वाम् अज्ञः परिचरति ॥ १ ॥

मुद्गल० 'का राधत्' इति द्वादशर्चं पञ्चमं सूक्तम् । कक्षीवान् ऋषिः । आद्या गायत्री । द्वितीया 'विद्वांसौ' इत्येषा ककुप्, मध्यमपादस्य द्वादशाक्षरत्वात् । 'मध्यमश्चेत् ककुप्' ( अनु १,५,३ ) इति तल्लक्षणम् । तृतीया 'ता विद्वांसा' इत्येषा ककुप् । मध्यमपादस्य काविराट् 'नवकयोर्मध्ये आगतः काविराट्' ( अनु १,५,३ ) इत्युक्तलक्षणत्वात् । चतुर्थी '[14]वि पृच्छामि' इत्येषा[14] नष्टरूपी, 'नवकौ प्राजयोर्दशकोऽष्टकौ' ( अनु १,६,६ ) इत्युक्तलक्षणोपेतत्वात् । 'प्र या घोषे' इति पञ्चमी तनुशिरा, 'एकादशिनोः परः षट्कस्तनुशिरा' ( अनु १,५,५ ) इत्युक्तलक्षणत्वात्[15] । 'श्रुतं गायत्रम्' इत्येषा षष्ठी । यद्यपि पादसङ्ख्यया न[16] उष्णिक्, तथाप्यक्षरसङ्ख्यया

---

१. नास्ति वि[11] अ[1] त लर्प. २. तारके वि[1] अ[3]. ३. नास्ति वि[1] अ[3]. ४. इन्द्रं कु. ५. अभिगतदीप्तिः वि[1] अ[3]. ६. नास्ति अ. ७-७. 'आराधयत् राध' अ. ८-८. 'चरति अ. ९. अज्ञः मूको. १०. युवाम् कु. ११. ता कु. १२. नास्ति वि[1] लर्प. १३. तेन वि[1] अ[3]. १४-१४. नास्ति मूको. १५. लक्षणात् मै[3]. १६. नास्ति मूको.

उष्णिक् । 'युवं हि' इति सप्तमी विराड्बृहती 'अष्टिनोर्मध्ये द्वावौ विराड्बृहती' ( अनु १, ७, ५ ) इति लक्षणोपेतत्वात् । 'मा कस्मै' इति अष्टमी कृतिः 'जागतावष्टका कृतिः' ( अनु १,६,१ ) इत्युक्तलक्षणसद्भावात् । 'दुहीयन्' इति नवमी विराट् । इत्यस्यां तावत्तिस्रो गायत्र्यः । अश्विनौ देवता' ॥

हे अश्विना ! अश्विनौ वाम् युवाम् का होत्रा वाङ्नामैतत् ( तु. निघ १,११ ) । कीदृशी स्तुतिलक्षणा वाक् राधत् आराधयति प्रीतौ करोति । युवयोर्माहात्म्यानुरूपा स्तुतिर्नास्तीत्यर्थः । किञ्च वाम् युवयोरुभयोः सोमे जोषणे सेवने समर्थः कः स्तोता विद्यते । युष्मद्गुणाभिज्ञः कश्चिदपि नास्तीत्यर्थः । अप्रचेताः युवयोर्माहात्म्यम् अजानंश्च कथा केन प्रकारेण विधाति युवां परिचरति' । युष्मद्विषये परिचरणमपि न कर्तुं शक्यत इत्यर्थः ॥ १ ॥

विद्वांसाविद् दुरः पृच्छेदविद्वानित्थापरो अचेताः । नू चिन्नु मर्ते अक्रौ ॥२॥

विद्वांसौ । इत् । दुरः । पृच्छेत् । अविद्वान् । इत्था । अपरः । अचेताः । नु । चित् । नु । मर्ते । अक्रौ ॥२॥

स्कन्द० यास्यामुचि वाक्यकद्युतेर्वच्छन्दोऽध्याहर्तव्यः' । तथा' चैकवाक्यता । यौ विद्वांसौ जानन्तौ । इत् शब्दः' पदपूरणः । दुरः स्तुतेः द्वाराणि । उपायान्' इत्यर्थः । पृच्छेत्' पृच्छति सर्वः स्तोता । अविद्वान् इत्था । 'इत्था' ( निघ ३,१० ) इति सत्यनाम । सत्यमेवाजानन् कशाठ्येन । अपरः' स्थूलशक्तिः अचेताः ज्ञातुमसमर्थः 'स्वयम् । नु चित् नु नू' इति' पदपूरणः । चित् शब्द एवार्थे । पुराणानेव । मर्ते चतुर्थ्यर्थेऽत्र सप्तमी । मर्त्यस्य मनुष्यस्य । अक्रौ आक्रमणस्य कर्मणिदं छान्दसं रूपम् । आक्रमितारौ । वशीकर्तारावित्यर्थः ॥ २ ॥

वेङ्कट० विद्वांसौ एव द्वाराणि प्रष्टुम् अर्हति' अविद्वान् इत्थम् अन्यः चेतोविवर्जितः' । क्षिप्रम् एव मर्त्येषु अनाक्रान्तौ ॥ २ ॥

मुद्गल० इत्था इत्थम्, अनेन पूर्वोक्तप्रकारेण अविद्वान् अज्ञः स्तोता विद्वांसौ इत् सर्वज्ञावश्विनावेव दुरः द्वाराणि स्तुतिपरिचरणयोरुपायभूतान्'' मार्गान्'' पृच्छेत् प्रष्टुमर्हति । अपरः अश्विभ्याम् अन्यः सर्वोऽपि अचेताः चेतसा ज्ञानेन रहितः । तस्मादश्विनावेव पृच्छेदित्यर्थः । तौ च अक्रौ शत्रुभिरनाक्रान्तावश्विनौ नु चित् क्षिप्रमेव मर्ते मनुष्ये स्तोतरि भक्तानुग्राहकतया स्तः इति वाक्यशेषः । नु पूरणः ॥ २ ॥

ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य । प्रार्चद् दयमानो युवाकुः ॥ ३ ॥

ता । विद्वांसा । हवामहे । वाम् । ता । नः । विद्वांसा । मन्म । वोचेतम् । अद्य । प्र । आर्चत् । दयमानः । युवाकुः ।

स्कन्द० तौ' विद्वांसौ हवामहे आह्वयामो वयम् । युवामाहूतौ च सन्तौ नः अस्मभ्यम् । विद्वांसौ मन्म

---

१. नास्ति मै'; ले मै'. २. प्रति करोति मूको. ३. 'हार्थः अ. ४. यथा अ. ५-५. नास्ति अ. ६-६ नास्ति मूको. ६. उपाय अ. ७. नास्ति अ. ८. 'पर शक्तः अ. ९. नार्हन्ति वि' अ'. १०. चेतावर्जितः कु. ११. भरिकाः मै'. १२. नास्ति मूको.

प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वाम्। प्रैषयुर्न विद्वान् ॥५॥

प्र। या। घोषे। भृगवाणे। न। शोभे। यया। वाचा। यजति। पज्रियः। वाम्। प्र। इषऽयुः। न। विद्वान् ॥

स्कन्द० प्र या घोषे घोष्यमाणत्वाद् घोषः सोमः, तस्मिन्। सप्तमीश्रुतेः साकाङ्क्षत्वात् स्थितेति वाक्यशेषः। भृगवाणे न भृगवाणशब्दो भृगोः पर्यायः[1]। षष्ठ्यर्थे च सप्तमी। भृगोरिव। प्र शोभे प्रकर्षेण शोभते। यया वाचा यजति तृतीयवाराद्यः प्र-शब्द इहाप्यनुषज्यः। प्रकर्षेण यजति। पज्रियः पज्रो हविर्लक्षणमन्नम्, तद्वान् पज्रियः। अथवा पज्रा अङ्गिरसः, तेषामपत्यभूतः पज्रियः। कोऽसौ। कक्षीवान्। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः। कं यजति। उच्यते। वाम् युवाम्। क इव। उच्यते। इषयुः न अन्नकाम इव कश्चित्। विद्वान् जानन्। किम्। सामर्थ्याद् यष्टुं वा, युष्मन्माहात्म्यं वा साकाङ्क्षत्वात् ॥ ५ ॥

वेङ्कट० घोषो नाम ऋषिः। तस्मिन् या वाक् भृगौ च प्रकर्षेण शुशुभे युष्मत्स्तुतिभूता। [2]यया च[2] तादृश्या वाचा पज्रकुले[3] जातः कक्षीवान् [4]अधुना वाम् यजति। स तया स्तुत्या कक्षीवान्[4] इदानीम् अन्नकामः[5] प्रभवतु ॥ ५ ॥

मुद्गल० हे अश्विनौ! प्रभवति समर्था भवति सा वाक् या वाक् युष्मत्स्तुतिरूपा घोषे घोषाख्यायाः पुत्रे सुहस्त्याख्ये ऋषौ भृगवाणे न भृगौ च शोभे शोभते। यया च स्तुतिलक्षणया वाचा पज्रियः पज्रा अङ्गिरसः, तेषां कुलोत्पन्नः कक्षीवान् वाम् युवाम् यजति पूजयति स्तौति। सापि शोभत इत्यर्थः। इषयुः न इषम् अन्नम् आत्मनः कामयमानश्च विद्वान् स्तुत्यभिज्ञः कक्षीवान् ऋषिः प्रभवतु। युष्मदनुग्रहात् सम्पूर्णकामो भवत्वित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके अष्टमाध्याये द्वाविंशो वर्गः ॥

श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम्। आक्षी शुभस्पती दन् ॥६॥

श्रुतम्। गायत्रम्। तकवानस्य। अहम्। चित्। हि। रिरेभ। अश्विना। वाम्।
आ। अक्षी इति। शुभः। पती इति। दन् ॥ ६ ॥

स्कन्द० श्रुतम् कर्मणि लोट्। श्रूयताम्। गायत्रम् 'गायति' (निघ ३,१४) इत्यर्चतिकर्मसु पाठाद् अर्चतिकर्मायम्। गीयतेऽनेनेति गायत्रं स्तोत्रम्। तकवानस्य तकतेर्गतिकर्मणः (तु. निघ २,१४) एतद्रूपम्। उपगन्तुः स्तोतुः। एतद् ज्ञात्वा अहम् चित् अहम् अपि। हि-शब्दस्तु पदपूरणः। रिरेभ स्तुतवान् स्तौमि वा। हे अश्विनौ! वाम् युवाम्। किञ्च अक्षी अक्षिणी हे शुभः पती! वृद्धिलक्षणस्योदकस्यापि पती!। 'आ दन्'[6] भूतकालेऽत्र शतृप्रत्ययो द्रष्टव्यः। व्यत्ययेन चैकवचनम्। मर्यादया युञ्जन्तौ युवाम् ऋज्राश्वाय ॥ ६ ॥

---

१. नास्ति स. २. न मा कु. ३. पज्रकुले वि[1,2] अ[1]; पज्रकुले वि[3] अ[2]. ४-४. नास्ति कु. ५. नास्ति वि[1,2] क लप. ६. नास्ति स.

मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः । स्तनाभुजो अशिश्वीः ।८।

मा । कस्मै । धातम् । अभि । अमित्रिणे । नः । मा । अकुत्र । नः । गृहेभ्यः । धेनवः । गुः । स्तनऽभुजः । अशिश्वीः ॥ ८ ॥

स्कन्द० मा कस्मै चित् अभि धातम् अयं दधातिर्दानार्थः । आभिमुख्येन दत्तम् । किम् । द्वितीये पादे धेनूनामुपादानात् तत्साहचर्याद् धेनूर्वा धनं वा । अमित्रिणे अमित्राय । नः अस्माकम् । मा च अकुत्र अत्र ज्ञायते किं तदिति तदकं चोरस्थानम् तदाकुत्र । अज्ञेये चोरस्थान इत्यर्थः । अस्माकं सम्बन्धिभ्यः गृहेभ्यः युवाभ्यां दत्ताः धेनवः दुह्यन्ते या गावः ताः । गुः गमन् । चोरैर्मापहारिषतेत्यर्थः[1] । स्तनभुजः स्तना भुञ्जन्ते यास्ताः स्तनभुजः । दोग्ध्र्यः[1] इत्यर्थः । अशिश्वीः शिशवो बाला वत्सकाः, तद्रहिताः । गृहेषु बहुवत्सका इत्यर्थः । युष्मत्प्रसादेनेति शेषः ॥ ८ ॥

वेङ्कट० मा अस्मात् कस्मै चित् मैत्रीवर्जिताय अभि दत्तम्[1] । मा च अस्मद्गृहेभ्यः[2] धेनवः अप्रज्ञाते[3] देशे गमन्[4] स्तनं वत्सान् भोजयन्त्यः स्तनैर्वा अस्मान् रक्षन्त्यः शिशुवर्जिताः । तस्मात् [5]अपहाय मा गमतेति[5] ॥ ८ ॥

मुद्गल० हे अश्विनौ ! अमित्रिणे अमित्रं मित्ररहितत्वम् तद्वते कस्मै चिदपि शत्रवे नः अस्मान् मा अभि धातम् आभिमुख्येन मा स्थापयतम् । अपि च नः अस्माकम् गृहेभ्यः सकाशात् स्तनभुजः स्तनैर्वत्सान् मनुष्यांश्च पालयन्त्यः धेनवः गावः अशिश्वीः शिशुना वत्सेन विरहिता अस्मदीये गृहेऽभ्यागता वा सत्यः अकुत्र चित् अस्माभिरगम्ये प्रदेशे मा गुः मा गच्छन्तु ॥ ८ ॥

दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।
इषे च नो मिमीतं धेनुमत्यै ॥९॥

दुहीयन् । मित्रऽधितये । युवाकु । राये । च । नः । मिमीतम् । वाजऽवत्यै ।
इषे । च । नः । मिमीतम् । धेनुऽमत्यै ॥ ९ ॥

स्कन्द० दुहीयन् दुह्यमानम् मित्रधितये धेट् पाने इत्यस्य दधातेर्वा[6] दानार्थस्येदं रूपम् । मित्राणां पानार्थं मित्रेभ्यो वा दानार्थम् । युवाकु यु मिश्रणे । मिश्रणीयं पयः । पानार्हमित्यर्थः[10] । युष्मत्कामं वा युवाकु । युवयोः यागयोग्यमित्यर्थः[11] । किञ्च राये च सर्वत्रात्र द्वितीयार्थे चतुर्थी । धनम् च नः अस्मभ्यम् मिमीतम् मिमीहिर्दानकर्मा (तु. निघ ३,२०) । याच्ञया अत्र तत्पूर्वकं दानं लक्ष्यते । दत्तम् । वाजवत्यै अन्नवतीम् । अन्नसहितं धनम्, न केवलमित्यर्थः । इषे च अन्नं च । नः अस्मभ्यम्[12] मिमीतम् दत्तम् । धेनुमत्यै धेनुमतीम् । धेनुभिस्सहितमन्नम्, न केवलमित्यर्थः ॥ ९ ॥

---

१-१. नास्ति अ. २. °हरिषते° मूको. ३. दुहितम् मूको. ४. प्रज्ञाते वि[1] अ[3]. ५. अस्मात् गृ° वि[1] अ[3]. ६. नास्ति वि[3]. ७. अगमन् कः नास्ति वि[1] अपं. ८-८. गमितेति वि[1] अ[3], † गामयापहितेति वि[1,3] अ[1]; क अर्थं गमन् कु. ९. नास्ति अ. १०. °नार्थमि° अ. ११. योग्यमित्यर्थं अ. १२. नं कु. १३. नास्ति कु.

वेङ्कट० 'युष्मत्कामाः[1] मित्रधारणार्थं कामाद् युवाम् दुदोहन् तथा मति धनाय बलवते अस्मान् कुरुतम् तथा धेनुयुक्ताय च अन्नाय कुरुतम् इति‡ ॥ ९ ॥

मुद्गल० हे अश्विनौ! युवाकु युवां कामयमानाः स्तुतिभिर्वाचयितारः स्तोतारः मित्रधितये मित्राणां बन्धुजनानां धारणार्थम् दुदोहन् युष्मत्सकाशाद् धनानि दुहन्ति प्राप्नुवन्ति । अतः नः अस्मानपि बलवते अश्वयुक्ताय च राये धनाय मिनीतम् कुरुतम् तथा धेनुमत्यै धेनुनियुक्तायै इषे अन्नाय च नः अस्मान् मिमीतम् कुरुतम् । अस्मभ्यं स्तोतृभ्यः बहुधनं धनं गोयुक्तमन्नं[2] च प्रयच्छतमित्यर्थः ॥ ९ ॥

## अश्विनोरसनं रथमनश्वं वाजिनीवतोः । तेनाहं भूरि चाकन ॥ १० ॥

अश्विनोः । असनम् । रथम् । अनश्वम् । वाजिनीऽवतोः । तेन । अहम् । भूरि । चाकन ॥ १० ॥

स्कन्द० अश्विनोः स्वभूतम् असनम् रथम् स्तुतिभिः सम्भक्तवानहम् । स्तुतवानित्यर्थः । कीदृशम् ? अनश्वम् अश्ववर्जितम् । वाजिनीवतोः वाजो बलम्, तद्वती सेना वाजिनी । अन्नं वा इविर्लक्षणं वाजम्, तद्वती । सत्राहीनादियागसन्ततिर्वाजिनी, तद्वतोः । स्वार्थिको वा मतुब् मत्वर्थीयः, बलवतोरन्नवतोर्वा । तेन स्तुतेन हेतुना अहम् भूरि बहु चाकन कामयेऽश्विनौ । यस्मात् ते रथं स्तुतवान्[3] तस्माद्[4] बहु यमदभिप्रेतं तत्सर्वमश्विनौ याचे इत्यर्थः ॥ १० ॥

वेङ्कट० अश्विनोः अभजम् रथम्[5] अश्वरहितम् अन्नवतोः । तेन अहम् बहु कामये ॥ १० ॥

मुद्गल० वाजिनीवतोः वाजम् अन्नं, तद्वत्क्रियावतोः अश्विनोः असनम् अश्वरहितम् अश्वराहित्येऽपि सामर्थ्यातिशयेन गच्छन्तम् रथम् असनम् अहम् स्तोता समभजम् । तेन च रथेन भूरि प्रभूतं श्रेयः चाकन कामये ॥ १० ॥

## अयं समह मा तनूह्याते जनाँ अनु । सोमपेयं सुखो रथः ॥ ११ ॥

अयम् । समह । मा । तनु । ऊह्याते । जनान् । अनु । सोमऽपेयम् । सुऽखः । रथः ॥ ११ ॥

स्कन्द० 'कतमोऽयं रथः'[6] । उच्यते । यः अयम् हे समह! महः उत्सवः पूजा वा,[7] सहितो महेन समहः । नित्योत्सवयुक्तः पूज्यो वा । व्यत्ययेन चात्रैकवचनम् । हे समहौ! नित्योत्सवयुक्तौ पूज्यौ वेत्यर्थः । मा माम् तनु लडर्थेऽयं लोट् । अन्यपुरुषस्य स्थाने मध्यमपुरुषः । तनुते । सर्वकामसमृद्ध्या विस्तारयतीत्यर्थः । ऊह्याते प्राप्यते च युवाभ्याम् । जनान् अनु मनुष्यान् यजमानान् प्रति सोमपेयम् सोमपानं च प्रति सुखः रथः ॥ ११ ॥

वेङ्कट० अयम् त्वं[8] स्तुतियुक्त रथ[9]! मां विस्तीर्णं कुरु[9] । सोऽयम् ऊह्यते अश्विभ्याम्[10] जनेषु[11]

---

१-१. नास्ति वि[1] अ[1]. † युष्मान् कामाः वि[1] वपे. ‡ नास्ति कु. २. गोयुक्त[2] मूको. ३. स्तुता अ. ४. तस्मात् कु; कस्मात् अ. ५. नास्ति वि[1] अ[1]. ६-६. नास्ति कु; कतमो वो रथः अ. ७. नास्ति वि[1] अ[1,2]. ८. त्वं वि[1] अ[1]. ९. मा वि[1,3] अ[1] ऊ लपं. १०. अश्विनेषु वि[1] अ[1].

सोमपेयं प्रति सुदानुः[1] रथः ॥ ११ ॥

मुद्गल० हे वसव! धनेन सहित! रथ! अयम् पुरोवर्ती त्वम् मा माम् तनु विस्तारय पुत्रपौत्रधनादिभिः समृद्धं कुरु। स च सुखः शोभनावकाशः रथः जनान् अनु स्तोतृजनेषु सोमपानम् सोमपानं प्रति ककाले उपाते अश्विभ्यां नीयते। अतोऽश्विभ्यां बदीयते तत्सर्वं रथ एव ददातीति रथं सम्बोध्य प्रार्थना ॥ ११ ॥

अध स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः। उभा ता बस्रि नश्यतः ॥ १२ ॥

अध। स्वप्नस्य। निः। विदे। अभुञ्जतः। च। रेवतः। उभा। ता। बस्रि। नश्यतः ॥१२॥

स्कन्द० 'उत्तमा स्वप्ननाशिनी'। पञ्चानामाश्विनानां सूक्तानामुत्तमा या ऋक् एषा स्वप्ननाशनार्था। अध-शब्दोऽत्र पदपूरणः, एतस्मादित्यस्यार्थे वा। एतस्मात् पञ्चभिः सूक्तैः अश्विनोः[1] स्तुतेः करणात्[2]। स्वप्नस्य स्वप्नशब्देनात्र यः शमितुर्दुःस्वप्न इष्यते स उच्यते, न स्वप्नमात्रम्। द्वितीयार्थे च षष्ठी। दुःस्वप्नम्। निः विदे विद् सत्तायामित्यस्यान्तर्णीतण्यर्थस्य रूपम्। निर्वेदयामि निस्सत्ताकं[4] करोमि। नाशयामीत्यर्थः। न च केवलं दुःस्वप्नम्। किं तर्हि। अभुञ्जतः च इयमपि द्वितीयार्थे एव षष्ठी। अभुञ्जानं च। भोक्तुं[5] चासमर्थमित्यर्थः। कम्। सामर्थ्याज्जाठराग्निम्। रेवतः धनवतः[6]। सति भोज्ये या भोजनाशक्तिः[7] ताश्चेत्यर्थः। नाश्यमानौ उभा उभावपि ता तौ बस्रि निपातोऽयं [8]क्षिप्रार्थः। क्षिप्रम्। नश्यतः[9] लोडर्थेऽत्र लट्। अश्विनोः प्रसादेन मत्तो नश्यताम् ॥ १२ ॥

वेङ्कट० म्रियमाणः कर्मान्तान्[10] अलभमानो धनम् कदर्यं निन्दति[11]। अथ[12] स्वप्नस्य "अहं रात्रौ" इदस्य प्रातरुद्यमानार्थस्य आशितान् भरतः[13] कदर्यतया वाऽभुञ्जानस्य धनवतः च निर्विदे। तौ उभौ अपि क्षिप्रम् नश्यतः इति निर्वेदः ॥ १२ ॥

मुद्गल० अध इदानीं प्रभातसमये स्वप्नस्य स्वप्नं प्रति निर्विदे निर्विण्णोऽस्मि। तथा अभुञ्जतः परान् अरक्षतः रेवतः धनवतः पुरुषस्य। एवंभूतं पुरुषं प्रत्यपि निर्विण्णोऽस्मि। यतः ता उभा तावुभौ बस्रि क्षिप्रं नश्यतो नाशं प्राप्नुतः। स्वप्नदृष्टः पदार्थः प्रातर्नोपलभ्यते, कदर्यस्येव धनम् अभुक्तम् अदत्तं सत् क्षिप्रमेव नश्यति। तदुभयविषयो निर्वेदो मां बाधत इत्यर्थः। च पूरणः ॥ १२ ॥

इति प्रथमाष्टके अष्टमाध्याये त्रयोविंशो वर्गः ॥

इति प्रथमे मण्डले सप्तदशोऽनुवाकः ॥

---

१. सुखकरो कु. २. नास्ति अ. ३. करणात् कु. ४. निस्सत्तां मूको. ५. च: [illegible] अ. ६. भोजनशक्तिः मूको. ७-७. नास्ति अ. ८. अशीन् वि¹ अ¹. ९. निकृत्यै वि¹ अ². १०. [illegible] कु; नास्ति वि¹ अ². ११-११. [illegible] वि¹ अ². १२. भरक्षितः वि¹ अ¹.

[ १२१ ]

कदित्था नॄँः पात्रं देवयतां श्रवद् गिरो अङ्गिरसां तुरण्यन् ।
प्र यदानड् विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः ॥ १ ॥

कत् । इत्था । नॄन् । पात्रम् । देवऽयताम् । श्रवत् । गिरः । अङ्गिरसाम् । तुरण्यन् ।
प्र । यत् । आनट् । विशः । आ । हर्म्यस्य । उरु । क्रंसते । अध्वरे । यजत्रः ॥ १ ॥

स्कन्द० 'ऐन्द्रं च'। ऐन्द्रमेतत्सूक्तम् । 'ऐन्द्रं वक्ष्यते सूक्तं तत्र कदित्थेत्येतत् पञ्चमौशिजस्य । वैश्वदेवमप्येतत् समाम्नातम् प्रतिनाभानेदिष्ठं ब्राह्मणोक्तम्' ॥ अत्रेत्ययम् 'ऐन्द्रं च वैश्वदेवं च उत्तरे दानसंस्तवः' इत्येतेषां परस्तादुक्तानां प्रतिनिर्देशः । तेषां मध्ये यदैन्द्रं सूक्तमुक्तं कदित्थेत्येतत् पञ्चमौशिजस्य कक्षीवतः । एतद् वैश्वदेवमपि । एवं हि साङ्ख्यायनानां ब्राह्मणे समाम्नातम् "तथानि तत्र वैश्वदेवानि भवन्ति[1] तान्युद्धृतान्यानि प्राजापत्यान्यनिरुक्तानि[2] परोक्षवैश्वदेवान्यतीयन्ते 'प्र वः पान्तं रघुमन्यवोऽन्धः'[3] (ऋ १,१२२,१), 'तं प्रत्नथा पूर्वथा विश्वथेमथा'[4] (ऋ ५,४४,१), कदित्था नॄँः पात्रं देवयताम्" इति प्रतिनाभानेदिष्ठम्[5] (शांब्रा २४,९) इति । अत्र ब्राह्मणे परोक्षवैश्वदेवं प्रतिनाभानेदिष्ठं चेदमुक्तम् । प्रतिनाभानेदिष्ठमिति च नाभानेदिष्ठस्य प्रतिनिधिरुच्यते । नाभानेदिष्ठं[6] वैश्वदेवम् । तस्य प्रतिनिधित्वादिदमपि वैश्वदेवम् । परोक्षवैश्वदेवं तु इन्द्रादन्यासां 'स्तम्भीद्ध द्याम्' (ऋ १,१२१,२) इत्यादीनां देवतानां विशेषणत्वेन कीर्त्यमानत्वात् । कत्-शब्दोऽत्र 'कद्ध नूनम्' (ऋ १,३८,१) इतिवत् कदेत्यस्यार्थे । कदा इत्था सत्यम् । नॄन्[7] षष्ठ्यर्थेऽत्र च[8] द्वितीया । मनुष्याणामस्माकं स्वभूतम् । पात्रम् अद्भक्षणसाधि[9] देवयताम् देवकामानाम् अङ्गिरसाम् पितृशब्दत्वार्थे[10] सोऽयमित्यभिसम्बन्धादयस्य प्रयोगः । अङ्गिरसोऽपत्यभूतानाम् । तुरण्यन् त्वरमाण इन्द्रः[11] । पिबेदिति वाक्यशेषः । अथवा शृणुयाच्च गिरः स्तुतिलक्षणा वाचः । 'प्र आनट्' प्रेत्ययमुपसर्गो वीत्यस्यार्थे । व्याप्नोति विशः मनुष्यान् यष्टॄन् । आकारस्तु पदपूरणो मर्यादायां वा । मर्यादया व्याप्नोति । किञ्च हर्म्यस्य इत्यत्रेदं रूपम् । हर्म्यः शत्रुघ्नानामिन्द्रस्य । उरु बहु । क्रंसते करोतेरयम् लेटि[12] । नुमागमश्छान्दसत्वात् । क्रमेर्वा करोतेरर्थे । करोति । अध्वरे यज्ञे । यजत्रः यष्टा मनुष्यः । अथवा[13] 'हर्म्यम्' (निघ ३,४) इति गृहनाम । सप्तम्यर्थेऽत्र षष्ठी । अध्वरे इत्यनेन चास्य सम्बन्धः । क्रंसते इति क्रमिः गत्यर्थ एव । यज्ञगृहे योऽध्वरः, यस्मिन् बहु क्रामतीन्द्रः । पुनःपुनः गच्छतीत्यर्थः । यजत्रः यष्टव्यः ॥ १ ॥

वेङ्कट० देवान् इच्छताम् अङ्गिरसाम् अस्माकम् इत्थं प्रवृत्ताः[11] स्तुतीः[12] इन्द्रः कदा शृणोति आशितान् वा तान् नॄन् क्षिप्रकारी । यदा कामानाम्[13] आहरणशीलत्वेनेन्द्रस्य यजमानः विशः ऋत्विजः प्रकर्षेण व्याप्नोति, ततोऽसाविन्द्रस्तस्य यज्ञे[14] गन्तुं विस्तीर्णम् अवकाशं क्रमते यज्ञेषु यष्टव्यः ॥ १ ॥

---

१. नास्ति मूको. २. अनिरुक्तानि प्राजापत्यानि मूको. ३. न्धः मूको. ३-४. नास्ति मूको. ५. °नेदिष्ठम् अ. ६. नास्ति अ. ७. नॄन् मूको. ८. प्रतिष्ठ° अ. ९. किं अ. १०. लेटि कु. ११. प्रवृत्ताः वि[२] अ[१]. १२. स्तुतिः वि[१] अप. १३. कामान् वि[१] अ[१]. १४. यज्ञेषु वि[१] अ[२].

उत्पन्नाम् गाम् रात्रिम् अनु नक्षत अनु पश्चात् पश्यति प्रकाशते। एवं पौरुषप्रकाशोऽपि स्वगत्या निष्पादितायाः रात्रेरुपसश्च पश्चाद् उदेतीत्यर्थः। अपि चेदमपरम् आश्चर्यं वक्ष्यम् अजस्य मेनाम् स्त्रीनामैतत् ( तु. या. ३,२१ )। वस्त्रिवर्तं वड्वाम् गोः मातरम् जननीम् पर्यविपर्यस्त्वे, विपरीतमकरोत्। कदाचिद् इन्द्रो लीलया वडवायां गाम् उत्पादयामास। तदेतत् प्रतिपाद्यते ॥ २ ॥

नक्षद्धव॑मरु॒णीः पू॒र्व्यं राट् तु॒रो वि॒शामङ्गि॑रसा॒मनु॒ द्यून् ।
तक्ष॒द् वज्रं॒ निर्यु॑तं त॒स्तम्भ॒द् द्यां चतु॑ष्पदे॒ नर्या॑य द्वि॒पादे॑ ॥ ३ ॥

नक्ष॑त् । हव॑म् । अ॒रु॒णीः । पू॒र्व्य॑म् । राट् । तु॒रः । वि॒शाम् । अङ्गि॑रसाम् । अनु॑ । द्यून् ।
तक्ष॑त् । वज्र॑म् । निऽयु॑तम् । त॒स्तम्भ॑त् । द्याम् । चतुः॑ऽपदे । नर्या॑य । द्वि॒ऽपादे॑ ॥ ३ ॥

स्कन्द० नक्षत्[1] णक्ष णृच णक्ष गतौ। गच्छतीन्द्रः। हवम् आह्वानं प्रति। कदा। उच्यते। यदा अरुणीः अरुणवर्णोषाः। पूर्व्यम् पूर्वं प्रथमम्। राट् आख्यातमेतत्। छान्दसत्वात्तु निघाताभावः। 'राजृ दीप्तौ'। उषसि उदितमात्रायामित्यर्थः। तुरः त्वरिता तूर्विता वा शत्रूणाम्। कस्य हवम्। उच्यते। विशाम् मनुष्याणाम् अङ्गिरसामृषीणां तदपत्यभूतानां वा अस्माकम्। 'अनु द्यून् अनुशब्दोऽत्र' 'लक्षणेत्थंभूताख्यानभागवीप्सासु'[2] ( पा १,४,९० ) इत्येवं वीप्सायां कर्मप्रवचनीयः। 'द्युः' ( निघ १,९ ) इत्यह्नो नामधेयम्। अहन्यहनीत्यर्थः। किञ्च तक्षत् तक्षतिः करोतिकर्मा ( तु. या ४,१९ )। पुरोऽपि सोपसर्गो द्रष्टव्यः। संस्करोति वज्रम्। कीदृशम्। उच्यते। नियुतम् निशब्दोऽत्र प्रकर्षे, नियुक्तं विलक्षमिति यथा। प्रकर्षेण शत्रुभिः सहात्मनो मिश्रयितारम्। शत्रुशरीरेषु प्रवेष्टारमित्यर्थः। तस्तम्भत् तुल्यस्वेऽपि 'संहितायाः तक्षदित्यनेन लङन्तेन'[3] समुच्चारणादिदमपि[3] पदकारेण तस्तम्भदिति लङन्तं परिगृहीतं न लिडन्तं तस्तम्भेति। अत्यर्थं स्तम्नाति[4] तैस्तैरुपायैः द्याम् दिवम्। कस्यार्थाय सर्वमेतत् करोति। 'उच्यते। चतुष्पदे'[5] नर्याय द्विपादे नरेषु भवत्वर्थम्। मनुष्येषु भवं यच्च चतुष्पाद् यच्च द्विपात् तस्य सर्वस्यार्थाय ॥ ३ ॥

वेङ्कट० उषसः राजयन्[6] सुक्ष्यम् स्तोत्रं व्याप्नोति क्षिप्रः अङ्गिरसाम् विशाम्[7] अनुतक् दिवसेषु। करोति च वज्रम् नितरां पृथक् मावयितारम्। यथा मनुष्यहिताय गवादिकाय द्याम् उपरि अस्तभ्नात् द्विपदे च यथासुखम् स्यादिति[8] ॥ ३ ॥

मुद्गल० अरुणीः अरुणवर्णा उषसः राट् राजयन् प्रकाशयन् सूर्यात्मा इन्द्रः पूर्व्यम् पूर्वैर्ऋषिभिः प्रयुक्तम् हवम् इदानीम् अस्माभिः क्रियमाणमाह्वानम् नक्षत् लक्षत् शृणोतु। कीदृशः। अनु द्यून् अनुदिवसम् विशाम् मनुष्याणाम् अङ्गिरसाम् ऋषीणां स्तोतृणाम् तुरः धनस्य प्रेरयिता। अपि च। स इन्द्रः वज्रम् स्वकीयम् आयुधम् नियुतम् नितरां युक्तम् तक्षत् अकरोत्। तथा द्याम् द्युलोकम् तस्तम्भत् अस्तम्भयच्च। यथा अधो न पतति तथाऽकरोदित्यर्थः। किमर्थम्। नर्याय नृभ्यो हिताय चतुष्पदे गवाश्वादये द्विपादे मनुष्याय च। एतदुभयार्थमित्यर्थः ॥ ३ ॥

---

१. नास्ति मूको. २. नास्ति कु. ३-३. नास्ति ख. ४-४. सैहितायामनेन ख. ५. समुच्चर° कु.
६. व्याप्नोति भ. ७. राज वर् त वि[1]; राजन् वि[3] अ[2]. ८. नास्ति वि[1] अ[2].

स्कन्द० तुभ्यम् इति तादर्थ्ये चतुर्थी । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तवार्थाय तत् पयः उदकम् । स्वं वर्षसोत्येवमर्थं तदुदकमित्यर्थः । यत् कतमत् । उच्यते । यत् पितरौ सर्वस्य पितृभूते द्यावा-पृथिव्यौ अनीताम् आदित्यं प्रति नीतवन्तौ । यद्व द्यावापृथिवीभ्यामाहृत्य रश्मयो नीतवन्तः तद्धेतुत्वप्रतिपत्त्या द्यावापृथिव्यावेव नीतवत्यावित्युच्यते । रायः धनभूतं सर्वस्य । सुरेतः शोभन-मुदकम् । एव इत्यनेन चोदकत्वमुक्तम् । सुरेत इत्यनेन तु तस्य शोभनत्वमुच्यत इति नास्ति पौनरुक्त्यम् । किंरूपाय तुभ्यम् । उच्यते । तुरणे त्वरणाय तुविते वा शत्रूणाम् । किंरूपे द्यावापृथिव्यौ । तुरण्यू क्षिप्रे । न च केवलमुदकम् । किं तर्हि । शुचि शुद्धम् यत् ते रेक्णः धनभूतम् । आ अयजन्त आभिमुख्येन दत्तवन्तः । कृतवन्त इत्यर्थः । के । सामर्थ्यात् प्रजापतिप्रभृतयः सर्वे देवाः । सबर्दुघायाः सवः अमृतमुच्यते । अमृतमये दोग्ध्र्याः पयः क्षीरम् उस्रियायाः गोः । तदपि तुभ्यं तव पानार्थमित्यर्थः । अथवैकमन्यथा व्याख्या ऋचोऽर्थयोजना । 'तुभ्यं पय इत्यत्र' इत्युच्यते । पितराविति क्षेपामपत्यानां पितृत्वात् पालयितृत्वाद्वा दंपती यजमानौ । अनीतामित्यपि ऊर्ध्वं लङ् । दर्शपूर्णमासयोर्द्वयावपि यजमानौ वेदिं प्रति नयतः तवार्थाय । यत्र धनं पुरोडाशादिकम् । सुरेतः शोभनं प्रणीतालक्षणं संस्कारकमुदकं यस्य तत् सुरेतः । यत्र ते तुभ्यमायजन्त मर्यादया ददति ऋत्विजः पयः 'उस्रियाया: स्वभूतं' तदपि तवैवार्थाय । शिष्टपदयोजना सदृशी ॥ ५ ॥

वेङ्कट० त्वदर्थम् 'आत्मीयं धनं' यदा द्यावापृथिवी नयतः 'शोभनवर्षादिरेतस्कं' धनं क्षिप्रकारिणे तुभ्यम् भरणशीले । यदा च तद् गोषु पयोरूपेण परिणतं यजमाना 'अमृतदुघायाः उस्रियायाः' गोः पयोलक्षणम् शुचि धनं तदा आ अयजन्त । आगच्छन् अस्य सात्राज्यस्य मद इति ॥ ५ ॥

मुद्गल० हे इन्द्र! तुरणे क्षिप्रकारिणे तुभ्यम् तुरण्यू कृत्स्नं जगत् पोषयन्त्यौ पितरौ उत्पादयन्त्यौ द्यावापृथिव्यौ यत् यदा रायः सान्नाय्यलक्षणं हविः अनीताम् गोष्वनयताम् । त्वद्धितार्थ-मित्यर्थः । हविषः कारणादि जगदुत्पद्यते । तत् यदा द्यावापृथिवीभ्यां गोष्वानीतम् शुचि शुद्धम् सबर्दुघायाः क्षीरस्य दोग्ध्र्याः उस्रियायाः गोः पयः । कीदृशं पयः । रायः शोभनम् सुरेतः सुष्ठु रेतसा उदकेन गोरूधसि उत्पन्नम् रेक्णः धनवद्रक्षितव्यम् । एवंविधं हविः ते तुभ्यम् आ अयजन्त आभिमुख्येन यजमानाः प्रायच्छन् । तदानीं 'दुरो मानुषस्य दुरो द्वाराणि' अपवृणोतीति पूर्वया सम्बन्धः ॥ ५ ॥

इति प्रथमाष्टके अष्टमाध्याये चतुर्विंशो वर्गः ॥

अध॒ प्र ज॑ज्ञे त॒रणि॑र्ममत्तु॒ प्र रो॑च्य॒स्या उ॒षसो॒ न सूरः॑ ।
इन्दु॒र्येभि॒राष्ट॑ स्वे॒दुह॑व्यैः स्रु॒वेण॑ सि॒ञ्चञ्ज॒रणा॒भि धाम॑ ॥ ६ ॥

अध॑ । प्र । ज॒ज्ञे॒ । त॒रणिः॑ । म॒म॒त्तु॒ । प्र । रो॒चि॒ । अ॒स्याः । उ॒षसः॑ । न । सूरः॑ ।
इन्दुः॑ । येभिः॑ । आष्ट॑ । स्वे॒दुऽह॑व्यैः । स्रु॒वेण॑ । सि॒ञ्चन् । ज॒रणा॑ । अ॒भि । धाम॑ ॥ ६ ॥

---

१. नयेते° मूको २. क्षिप्रे कु. ३. °यजन्त° क. ४. तथा° ख. ५. नास्ति ख. ६. ···ग अ. ७-७. नास्ति ख. ८-८. आत्मीयस्तात् वि° अ°. ९-९. 'शोभनौद्रि° कु; 'वर्षादिशोभनम् वि° अ°. १०-१० 'अ दुग्धायाद्रुत्सियाय वि° अ° ११-११ नास्ति वि° अ°. †आयजन्त वि°; आयजन्त कर्म १२. नास्ति कु. १३-१३ दुरो मानुषस्य द्वा° मूको.

नि । गावः । गोऽस्थे । असदन् । नि । मृगासः । अविक्षत ।
नि । केतवः । जनानाम् । नि । अदृष्टाः । अलिप्सत ॥ ४ ॥

वेङ्कट० प्रदोषवेलायां स्वापार्थम् गावः गोष्ठे नि असदन् । तथा मृगाश्च नि अविक्षत । तथा बुभुक्षूणां जनानाम् प्रज्ञानानि चोपरमन्ति । अस्यां वेलायां सर्पाः बिलादुत्थाय[1] विषेण मामालिम्पन् ॥ ४ ॥

एत उ त्ये प्रत्यदृश्रन् प्रदोषं तस्करा इव । अदृष्टा विश्वदृष्टाः प्रतिबुद्धा अभूतन ॥ ५ ॥

एते । ऊं इति । त्ये । प्रति । अदृश्रन् । प्रऽदोषम् । तस्कराःऽइव ।
अदृष्टाः । विश्वऽदृष्टाः । प्रतिऽबुद्धाः । अभूतन ॥ ५ ॥

वेङ्कट० अपि च अमी रात्रिमुखम्[2] प्रति दृश्यन्ते चोरा इव । तेऽमी सर्वैः अदृष्टाः स्वयं सूक्ष्मेण चक्षुषा दृष्टविश्वजनाः । यूयम् प्रतिबुद्धाः स्थ[3] ॥ ५ ॥

[4]इति द्वितीयाष्टके पञ्चमाध्याये चतुर्दशो वर्गः[4] ॥

द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा ।
अदृष्टा विश्वदृष्टास्तिष्ठतेलयता सु कम् ॥ ६ ॥

द्यौः । वः । पिता । पृथिवी । माता । सोमः । भ्राता । अदितिः । स्वसा ।
अदृष्टाः । विश्वऽदृष्टाः । तिष्ठत । इलयत । सु । कम् ॥ ६ ॥

वेङ्कट० [5]ये वामी रोचने[5] दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः (मा १३,८) इति मन्त्रः । सूक्ष्मेक्षविश्वामिकजनाः[6] यथासुखम् तिष्ठत[7] स्वल्पक च शोभनम् ॥ ६ ॥

ये अंस्या ये अङ्ग्याः सूचीका ये प्रकङ्कताः ।
अदृष्टाः किं चनेह वः सर्वे साकं नि जस्यत ॥ ७ ॥

ये । अंस्याः । ये । अङ्ग्याः । सूचीकाः । ये । प्रऽकङ्कताः ।
अदृष्टाः । किम् । चन । इह । वः । सर्वे । साकम् । नि । जस्यत ॥ ७ ॥

वेङ्कट० ये अंसेन प्रहरन्ति[8] ये[9] च अङ्गैः ये वा पुच्छाग्रैः ये वा दन्तैः प्रहरन्ति[11] तेषां सर्वेषां किम् अस्मिन् मनुष्ये कार्यम् । शीघ्रमस्मात्[12] साकम् चिरतरम् उपक्षीणा भवत ॥ ७ ॥

उत् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।
अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ ८ ॥

---

१. ॰मुह्र॰ वि॰. २. रात्रिमुखम् वि॰; रात्रिमुख्यम् अ॰. ३. स्थः अ॰. ४-४. नास्ति मूको. ५-५. यो ये॰ वि॰; ये वा ये॰ अ॰. ६. ॰विज्ञेय वि॰ अ॰. ७. तिष्ठत मूको; हे सर्पाः! इति वाक्यशेषः. ८. नास्ति वि॰ अ॰. ९. प्रहरन्ति वि॰ अ॰. १०. यैः वि॰. ११. प्रहरन्ति वि॰ अ॰. १२. तस्मात् मूको.

उत् । पुरस्तात् । सूर्यः । एति । विश्वऽदृष्टः । अदृष्टऽहा ।
अदृष्टान् । सर्वान् । जम्भयन् । सर्वाः । च । यातुऽधान्यः ॥ ८ ॥

वेङ्कट० एभिः[1] मन्त्रैर्विषभीषिका[2] क्रियते । हे सर्पाः! असौ सूर्यः पुरस्तात् उत् एति दृष्टसर्वजनः सर्पाणां
हन्ता सर्वान् एव सर्पान् विनाशयन् सर्वाः च रात्रौ वर्तमाना हिंसात्मिकाभूता यातुधानजातीः ॥ ८ ॥

उदंपप्तदुसौ सूर्यः पुरु विश्वानि जूर्वन् । आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥९॥

उत् । अपप्तत् । असौ । सूर्यः । पुरु । विश्वानि । जूर्वन् । आदित्यः ।
पर्वतेभ्यः । विश्वऽदृष्टः । अदृष्टऽहा ॥ ९ ॥

वेङ्कट० उत्पपात असौ सूर्यः पुरूणि व्याप्तानि रक्षांसि हिंसन् आदित्यः उदयपर्वतेभ्यः ॥ ९ ॥

सूर्ये विषमा सजामि दृतिं सुरावतो गृहे ।
सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१०॥

सूर्ये । विषम् । आ । सजामि । दृतिम् । सुराऽवतः । गृहे ॥ सः । चित् । नु । न । मराति ।
नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१०॥

वेङ्कट० सूर्ये अहम्[3] एतद् विषम् आ सजामि यथा सुरार्थी दृतिम् सुराकारगृहे प्रासङ्गयति[4]।
सः च सूर्यः कदाचित् अपि विषलिप्तोऽपि न म्रियते तथैव वयम् अपि न म्रियेमहि । दूरे
विषस्य योजनम् इन्द्रः करोतु । मधुरा सूर्ये दीप्तिः सुषुम्णाख्या च[5] चन्द्रमसमाप्याययन्ती
विष ! त्वा मधु करोतु ॥ १० ॥

इति द्वितीयाष्टके पञ्चमाध्याये षष्ठविंशो वर्गः[5] ॥

इयत्तिका शकुन्तिका सका जघास ते विषम् ।
सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥११॥

इयत्तिका । शकुन्तिका । सका । जघास । ते । विषम् ॥ सो इति । चित् । नु । न । मराति ।
नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥

वेङ्कट० इयत्तिका[6] भवतीति प्रादेशमात्रपरिमाणां शकुन्तिकां निर्दिशति, पिच्छमात्रां[7] वा । तादृशीं
सर्पघातिनीम् । इत्वा सा तव सर्प ! विषम् भक्षयति[8] ॥ ११ ॥

---

1. एते वि॰ लभ॰. 2. °षिका लभ॰. 3. तत् वि॰ लभ॰. 4. नास्ति वि॰ लभ॰. 5-5. नास्ति मूको.
6. इयत्तिका वि॰ अ लभ॰. 7. °मात्रे मूको. 8. भक्षति वि॰.

त्रिः स॒प्त वि॑ष्पुलि॒ङ्ग॒का वि॒षस्य॒ पुष्य॑मक्षन् ।
ताश्चि॒न्नु न म॑रन्ति॒ नो व॒यं म॑रामा॒रे अ॑स्य॒ योज॑नं हरि॒ष्ठा मधु॑ त्वा मधु॒ला च॑कार ॥१२॥

त्रिः । स॒प्त । वि॒ष्पु॒लि॒ङ्ग॒काः । वि॒षस्य॑ । पुष्य॑म् । अ॒क्ष॒न् ॥ ताः । चि॒त् । नु । न । म॒र॒न्ति॒ । नो इति॑ । व॒यम् । म॒रा॒म॒ । आ॒रे । अ॒स्य॒ । योज॑नम् । ह॒रि॒ऽस्थाः । मधु॑ । त्वा॒ । म॒धु॒ला । च॒का॒र॒ ॥१२॥

वेङ्कट० अयं तान्त्रिकाणां मणितिप्रकारः । विषचटिका[1] विष्पुलिङ्गकाः[2] महीभुजाः[3] सर्पानतिविघ्नन्ति । एकविंशतिः विष्पुलिङ्गकाः "विषस्य अग्रम्" अश्नन्ति ॥ १२ ॥

न॒वा॒नां न॑वती॒नां वि॒षस्य॒ रोपु॑षीणाम् ।
स॒र्वासा॑मग्र॒भं नामा॒रे अ॑स्य॒ योज॑नं हरि॒ष्ठा मधु॑ त्वा मधु॒ला च॑कार ॥ १३ ॥

न॒वा॒नाम् । न॒व॒तीना॑म् । वि॒षस्य॑ । रोपु॑षीणाम् ।
स॒र्वासा॑म् । अ॒ग्र॒भ॒म् । नाम॑ । आ॒रे । अ॒स्य॒ । योज॑नम् । ह॒रि॒ऽस्थाः । मधु॑ । त्वा॒ । म॒धु॒ला । च॒का॒र॒ ॥१३॥

वेङ्कट० ओषधीनामेकोनशतं[4] विषकं भवति । रुधिरोद्वेदनकर्मा । तासां सर्वासाम् गृवाहम् नाम अमृतम् 'इत्यमेवकाशीति'[5] ॥ १३ ॥

त्रिः स॒प्त म॑यू॒र्यः॑ स॒प्त स्वसा॑रो अ॒ग्रुवः॑ । तास्ते॑ वि॒षं वि ज॑भ्रिर उ॒द॒कं कु॒म्भिनी॑रिव ॥१४॥

त्रिः । स॒प्त । म॒यू॒र्यः॑ । स॒प्त । स्वसा॑रः । अ॒ग्रुवः॑ ।
ताः । ते॒ । वि॒षम् । वि । ज॒भ्रि॒रे॒ । उ॒द॒कम् । कु॒म्भिनीः॑ऽइव ॥ १४ ॥

वेङ्कट० एकविंशतिः मयूर्यः, याश्च स्वयं सरन्त्यः[7] गङ्गाद्या नद्यः[8], ताः ते सर्प! विषम् विविधं हरन्ति, यथा उदकम् कुम्भवत्यः स्त्रियः ॥ १४ ॥

इ॒य॒त्त॒कः कु॑षु॒म्भ॒कस्त॒कं भि॑न॒द्म्यश्म॑ना । ततो॑ वि॒षं प्र वा॑वृते॒ परा॑ची॒रनु॑ सं॒वतः॑ ॥१५॥

इ॒य॒त्त॒कः । कु॒षु॒म्भ॒कः । त॒कम् । भि॒न॒द्मि॒ । अश्म॑ना ।
ततः॑ । वि॒षम् । प्र । व॒वृ॒ते॒ । परा॑चीः । अनु॑ । स॒म्ऽवतः॑ ॥ १५ ॥

वेङ्कट० इयत्प्रमाणः नकुलः, स नेदानीं[9] यदि तव विषं हन्ति, ततः तकम् अयुक्तकारिणम् अहम् अश्मना भिनद्मि । तदा भीतः स इहागच्छति । ततः च विषम् हन्तुम् उद्युक्तो भवति दूरस्थाः भूमीः प्रति ॥ १५ ॥

---

१. °चटिका वि[1] अ[1]. २. विष्फुलि° वि[1] वर्ष; हविष्फुलि° वि[1] अ[1]. ३. लेल्टोभुजाः (ता) वि[2]; ल्लांभुजाः वि[3] अ[2] ड वर्ष. ४-४. विषं शते अ[1]; वि° शते वर्ष; विषशताम (°ता वि[1]) म वि[1],[2]. ५. एकोनशतम् वि[3] अ[2]. ६-६. इत्यमेव मान्ति भवति इत्यमेवं नाम्नीति वि[2]. ७. सरन्त्यः वि[1,2] अ[2] वर्ष. ८. नाद्य वि[1] वर्ष. ९. नेदानीं वि[1] ड वर्ष.

**कुषुम्भकस्तदब्रवीद्गिरेः प्रवर्तमानकः । वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥१६॥**

कुषुम्भकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः ।

वृश्चिकस्य । अरसम् । विषम् । अरसम् । वृश्चिक । ते । विषम् ॥ १६ ॥

**वेङ्कट०** गिरेः चरणार्थं प्रवर्तमानः नकुलः तत् इदं वचनम्[1] अब्रवीत्, वृश्चिकस्य विषम् अरसम् भवति । अरसम् वृश्चिक! ते विषम् इति ॥ १६ ॥

[2]इति द्वितीयाष्टके पञ्चमाध्याये षोडशो वर्गः[2] ॥

—※—

इति ऋग्वेदे सभाष्ये प्रथमं मण्डलं समाप्तम् ॥



१. नास्ति वि[1] अ[1]. २-२. नास्ति मूको.

# शोधपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ५८५ | ५ | बद्वे | बदूवे | ६८३ | १ | अर्ध्वयुः | अध्वर्युः |
| ,, | १८ | त्थापि | तथापि | ६८६ | ७ | रथैर्भ्यः | रथेभ्यः |
| ,, | २५ | नास्ति° | नास्ति | ६९२ | ३ | द्विर्यश्च° | द्विबर्हि° |
| ,, | ३० | त्थापि | तथापि | ६९७ | २५ | यर्यमी° | यंयमी° |
| ५८८ | ७ | वुझा | वुद्धा | ७०३ | १५ | °पावर्तेते | °पावर्तत |
| ५९९ | ५ | मद्वात् | न्यद्वात | ७१३ | २५ | काञ्चि° | कञ्चि° |
| ६०१ | ७ | जसैश्च | दसैंश्च | ७२२ | २० | स्वशब्दः | स्वयशब्दः |
| ६०३ | ५ | °श्रवण न | °श्रवणेन | ७२७ | ४ | सिन्धुः । | अदितिः । सिन्धुः । |
| ६०४ | १३ | सह गन्ध्यः | सहगन्ध्यः | ७३४ | १ | हरिडभिः | हरिडभिः |
| ६०८ | १६ | °रमिश्र° | °रश्मिश्च° | ७३९ | १६ | °क्षाक्षा- | °कक्षा- |
| ६१० | २६ | ध्रुवेभिः | ध्रुवेभिः | ७४० | ११ | °वदमनुवक्तव्यम् | °व्योऽनुवक्तव्यः |
| ६१३ | ३ | देवताः | देवता | ७४३ | १० | इन्दिवम् | इन्दुवम् |
| ६१७ | ८ | इच्छमानः | इच्छमानाः | ७४७ | २ | अविन्दत् | अविन्दत |
| ,, | २६ | °रित्येषु | °रित्येष | ,, | ४ | युष्मम् | युष्मम् |
| ६२१ | ८ | देवताः | देवता | ,, | ५ | °न्यादयः | °न्यादीः |
| ,, | १३ | गृणत | गृणत | ७५० | २३ | चित्तस्° | चित्तान्त्सु° |
| ६२६ | ३ | देवताः | देवता | ७५५ | २० | इन्द्रिया | इन्द्रियाम |
| ६३१ | ५ | पतन | पठन | ७५९ | १२ | °वयन्य° | °वमन्य° |
| ,, | १० | देवताः | देवता | ,, | १७ | देवताः | देवता |
| ६३६ | १६ | देवताः | देवता | ,, | २३ | °नारमेत्य° | °नारमतेत्य° |
| ६३९ | २४ | शुभम्° | शुभम्° | ७६१ | २० | रोदसी | रोदसी |
| ६४२ | २९ | देवताः | देवता | ७६३ | १ | चर्षसम् | चर्षणाम् |
| ६५० | ४ | सामर्थ्या- | सामर्थ्या- | ,, | ६,१० | महात्वम् | महत्त्वम् |
| ६५९ | २६ | वर्ति° | वर्तिः° | ७६५ | १३ | अलता | आलता |
| ६६७ | २३ | व्रतानि | व्रतानि | ७६६ | २४ | तरन्तम् | तरन्तस् |
| ६७१ | २ | °वर्तनेः | °वर्तनी | ७६९ | २ | देदः | देवः |
| ,, | २१ | देवते | देवता | ,, | १३ | हृदा | हृदा |
| ६७३ | ४ | वर्वितारौ | वर्वितारौ ! | ७७० | २७ | जानीय | न जानीय |
| ६७५ | १५ | सम्यमाम° | सम्यमम° | ७७२ | ५ | स्तुदित° | तुदित° |
| ६८० | १ | 'द्रवा | 'देवा | ७७४ | २० | दवाः ! | देवाः ! |
| ,, | ११ | सडवीर्ष | सुड्वीर्ष° | ७७७ | १ | निवध्यमनो | निवध्यमानो |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ७७७ | २१ | मूर्छन्ती: | मूर्छयन्ती: | ९३२ | १५ | वर्तेमा° | वर्धमा° |
| ७७९ | ११ | समन्तुताम् | समनुन्नाम् | " | २० | °नास्ति | °नस्ति |
| ७९९ | ६ | °विन्वावा° | °विम्वता | ९३६ | २६ | दुर्हणा° | दुर्हणा° |
| ८०३ | ४ | पुजयति° | पूजयेति° | ९६३ | १५ | °असुन: | °असुनः |
| ८०६ | १० | डुै डुनि | डुै इति | ९६६ | ९ | सत्रभ्यो | सत्रुभ्यो |
| ८०८ | १ | नि° | नि° | ९७२ | ८ | °रेयुज्जत | °रेयुञ्जत |
| " | ९ | युवस्त्ररा | युवं नरा | ९७५ | २१ | तुन्जर्तै | तुञ्जते |
| ८०९ | १५ | असुर: | असुरैः | ९७७ | ४ | °ध्यउये | °ध्याये |
| ८०९ | २३ | स्व: | स्व: आदित्यम् | ९९५ | २० | रात्री: | रात्रिः |
| ८१० | १३ | °त्रातुत्रा | °त्रातुत्रा° | ९९६ | ४ | शुाक्रवन्वतः | शुाक्रवर्तन्तः |
| ८११ | २२ | पात्वे° | अपात्वे° | ९९७ | २ | उप ददद् | उपदन्त |
| ८१८ | २८ | सतर्था | सन्नर्थां | १००० | २१ | ईरते । | कुर्या । ईरते |
| ८१९ | ७ | न | न: | १००३ | ६ | जगयुः | जगुर्युः |
| ८२४ | १ | सुरामस्वि° | सुराममश्वि° | १००४ | २० | धावते | धावते |
| " | २१ | सरडा | सरडो | १००८ | २४ | यज्ञियां: | यज्ञियाः |
| ८२७ | ७ | °मेता | °मेव | १०१२ | ३ | °युञ्जम् | °युञ्जद् |
| ८३२ | १० | दीसा: | दीसः | १०२० | ८ | वद् | वृद् |
| ८३४ | २५ | दयता° | दर्शता° | १०२३ | १९ | युन्जाथे | युञ्जाथे |
| ८४१ | १७ | °न्थिनमेव° | °न्थि एव | १०२७ | १ | °ग्री त्रि° | °ग्रीणि° |
| ८४२ | ८ | प्रथमा: | प्रथमा | १०५० | २५ | °मुभिरृ° | °मुभिरृ° |
| ८४७ | ५ | कतुम् | कर्तुम् | १०६१ | ६ | वृष्टयन्सु° | वृष्टयुन्सु° |
| ८७२ | ४ | ओकारी | ओकारो ! | १०६७ | २३ | विपूर्वी° | विपूर्वी° |
| ८७३ | २६ | °यसीमियो° | °यसीमयो° | १०७१ | २४ | तेनायन् | तेनायजन् |
| ८८८ | १६ | पद्वेड° | पेद्वेड° | १११९ | २२ | °न्यौ मम ! | °न्यौ ! मम |
| ८९६ | २९ | वेदचित्री | वेदचित्री | ११६१ | १२ | कर्मवन्तो | कर्मवन्तौ |
| ९०५ | २६ | यतन् | न्यतन् | ११२३ | १६ | °गुण | गुणे |
| ९०७ | १ | जिन्हा° | जिनजह्वा | ११२४ | ६ | बंहूते | बंहूते |
| ९०९ | ६ | हुवे | हवे | ११२९ | १६ | °वर्धन् | °न्वर्धन् |
| " | १४ | मनोजवन् | मनोजुवन् | ११३२ | ४ | °वितार: | °वितारम् |
| ९२६ | २३ | °दिकर्मेण | °दिकर्मेण | ११४० | २४ | °जनत: | °जनसः |
| ९२७ | ९ | दक्ष | नृक्ष | ११४२ | १९ | °कुकुभा: | °कुकुभा: |
| ९३१ | ३ | निरोद्री | निरोद्धी | ११४४ | ७ | मुरान् | मुरान् |



